॥ श्रीः ॥

-* हरिदास-संस्कृत-ग्रन्थमाला *-

१८०

॥ श्रीः ॥

बनारस-गवर्नमेण्ट-संस्कृत-कालेज-प्रथमपरीक्षापाठ्यनिर्धारितं

वाल्मीकिरामायणान्तर्गतम्

अयोध्याकाण्डस्य २४-३१ सर्गात्मकं-

# रामवनगमनम्

सटिप्पण-सान्वय-सुधा-इन्दुमती-संस्कृत-हिन्दी-

चतुष्टयप्लावितम् ।





प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज आफिस

बनारस सिटी ।

# प्राक्कथनम्



रामवनगमनञ्चेदं बाल्मीकिरामायणाऽयोध्याकाण्डान्तर्गतमिति प्रायेण सुप्रसिद्धमेवाऽतस्तदर्थे न किञ्चिद्वक्तव्यमस्ति। यद्यप्यत्रत्येतिवृत्तितो रामवनगमनोपक्रम एव प्रतीयते न तु 'रामवनगमनम्' तथापि वनगमनार्थमेव श्रीमतो रामस्य मातृदर्शनादिविधानाद् रामवनगमनमित्यस्य नामधेयम्। पितृ-मातृ-स्वामि-भ्रातृभक्तीनां यथाक्रमं सन्निवेशात् सुकुमारमतीनां बालानां महदुपकारमयं जनयिष्यतीति द्रढीयान् मे विश्वासः।

यद्यपि संस्करणान्तरे बहवः पाठभेदाः समुपलभ्यन्ते किन्तु नवीननियमावल्यनुरोधेन निर्णयसागरयन्त्रालयमुद्रितसंस्करणस्य विशुद्धपाठानुक्रम एव पाठो मया मूले सन्निवेशितः। अस्य च परीक्षोत्तितीर्षूणां बालानामुपयोगिनीं काञ्चिदपि टीकामनासाद्य सर्वथाऽतिविषमेऽपि समये चौखम्बासंस्कृतपुस्तकालयाध्यक्षैः गोलोकवासि-बाबू-हरिदासगुप्तात्मज--**श्रीजयकृष्णदासगुप्त**महोदयैः टीकां निर्मातुं प्रेरितोऽहं स्वल्पेनैव समयेन टीकां व्यरचम्। छात्रोपकारबद्धपरिकरैर्मिथिलाग्रन्थसम्पादकैरस्मन्मित्रप्रवरैः **श्रीरामचन्द्रझा** व्याकरणाचार्यमहाशयैर्महता परिश्रमेण 'इन्दुमती' नामकहिन्दीभाषया समलङ्कृतञ्चेदमतीव सारल्यं भजते। यदि चैनं संस्करणं समादाय छात्राः सन्तोषमेष्यन्ति तदाऽहमात्मानं सफलप्रयत्नं सम्भावयिष्यामि। आशासे च मुद्रणदोषात् प्रमादाद्वा यत्र क्वचन काश्चिदशुद्धयः परिलक्षिताः स्युस्ताः कृपया संशोध्य व्यवहरिष्यन्ति श्रीमन्त इति शम्।

**गुरुपूर्णिमा**
सं० २००४

**साहित्यव्याकरणाचार्यः**
**श्रीकृष्णमोहनशर्मा**

# ग्रन्थ-प्रशस्ति

काव्य ग्रन्थोंमें महर्षि बाल्मीकि प्रणीत 'बाल्मीकिरामायण' ही एक ऐसा मुख्य ग्रन्थ है जिसकी रचना काव्य-कलेवरमें सबसे पहले हुई। इसीलिये यह ग्रन्थ आदि काव्यके नामसे प्रसिद्ध है। इस ग्रन्थमें सबसे विशेषता यह है कि **रामावतारसे पूर्व ही** बाल्मीकिजीने अपने तपोबलसे इसको **रचनाकी** थी। इस ग्रन्थमें **चौबीस हजार श्लोक** हैं और प्रत्येक हजारके शुरू श्लोकके आदिम अक्षर यदि क्रमसे लिखा जाय तो **चौबीस अक्षरकी गायत्री** इस **ग्रन्थसे निकल आती** है। महर्षि बाल्मीकिजीकी मानव जातिका कल्याण करनेवाली और युगान्तरकारिणी अनुभूति (रामायण) ऐसी है जिसपर संसारके करोड़ों बड़े २ मनीषी लट्टू हो रहे हैं। इसमें भारतीय सभ्यता, पितृ-भक्ति, भ्रातृस्नेह, स्त्री शिक्षा, स्वामि-भक्ति, राजनीति आदिका वर्णन ग्रन्थकारने ऐसे मर्मस्पर्शी शब्दोंमें किया है कि विश्वके अन्य किसी भी धर्म-ग्रन्थोंमें नहीं है। रामायण हमें पुण्य-राज्यमें, ज्ञानीके ब्रह्मानन्दमें, योगीके योगानन्द-निकेतनमें और भक्तके प्रेम-निकुञ्जनमें लेजाने वाली है। इस ग्रन्थमें हिन्दूजातिकी समूची संस्कृति, सारा इतिहास और समस्त ज्ञान-विज्ञान भरे पड़े हैं।

**सीता-वनवासके उपरान्त महर्षि बाल्मीकिजीने अपने आश्रममें भगवती सती सीताके गर्भसे उत्पन्न युग्मज लव-कुश दोनों भाइयों को ही सर्व प्रथम इस ग्रन्थका अध्ययन कराया था।**

प्रस्तुत **'रामवनगमन'** इसी बाल्मीकि-रामायण अयोध्याकाण्डके अन्तर्गत २४ से ३१ सर्गात्मक है। यह अंश गवर्नमेंट संस्कृत कालेज, बनारसकी प्रथम परीक्षाके पाठ्य ग्रन्थोंमें निर्धारित हुआ है। १९४८ की नवीन नियमावलीके अनुसार निर्णय सागर प्रेससे प्रकाशित बाल्मीकि रामायणके मूलाधार पर ही यह ग्रन्थ तैयार किया गया है। आशा है इस संस्करणसे विद्यार्थियोंका अधिक लाभ होगा।

**गुरुपूर्णिमा**
वि० सं० २००४

विदुषामाश्रवः
—रामचन्द्र झा

# कथा-सारः

## चतुर्विंशः सर्गः

पित्राज्ञानुवर्त्तने दृढमनस्कं स्वतनयं ( रामम् ) अवलोक्य कौशल्या मामपि सहैव नय, यत इह दुःस्वभावानां सपत्नीनां मध्ये मे वासो नोचित इत्यगादीत्। भर्त्तृशुश्रूषणमेव सभर्त्तृकायाः कर्त्तव्यं तद्दते नान्यः पन्थाः कल्याणायेति ब्रुवतो रामस्य वनगमनं स्वां विनापि सा यथाकथञ्चिदनुमेने।

## पञ्चविंशः सर्गः

वनगमनोद्यतं रामं स्थावरजङ्गमादयः सर्वे देवा लोकपालादयश्च वने त्वां रक्षन्त्वित्याशीर्दत्वा कौशल्या मधुदध्यक्षतादिना द्विजैः स्वस्तिवाच्यं वाचयामास। तेभ्यश्च दक्षिणां समर्प्य वृत्रासुरवधे सुरेन्द्रस्य, सुधानयने गरुडस्य, अमृतोत्पादने दैत्यान् घ्नतः सुराधिपस्य, त्रिविक्रमान् प्रक्रमतो वामनस्य च यादृशं मङ्गलं समभवत्तादृशं तेऽस्त्वित्येवं विशेषतः पुनरप्याशीर्दत्वा परिष्वज्य च वनं गन्तुमादिदेश। अथ रामस्तच्चरणावभिवाद्य प्राणवल्लभां सीतामप्यनुमानयितुं तद्भवनं प्रतस्थे।

## षड्विंशः सर्गः

अविदिताभिषेकविघाततया प्रहर्षमाणा सीता देवान् सम्पूज्य यावद्भर्त्तुरागमनं प्रतीक्षते तावद्दुर्मनस्कं व्यपगतकान्ति ह्रियाऽवनतवदनं समागतं भर्त्तारं (रामम्) प्रोद्दय कुतस्त्वामभिषेकसम्भारा राजच्छत्रचामरादयो नोपतिष्ठन्ते, कुतश्चेदं मुखवैवर्ण्यमिति सीतया पृष्टो रामः प्राह-देवि। पुरा मम कैकेय्यै मात्रे वरद्वयं(१)मे पित्रा प्रतिश्रुतं साम्प्रतमभिषेकोद्यते नृपे तया पूर्वप्रतिश्रुतवरद्वयस्याऽयमेव समय इति विज्ञाय एकेन ममात्मजो भरतो राज्येऽभिषेच्यः, अपरेण चतुर्दशवर्षाणि रामो वने तिष्ठत्विति याचिते सत्यप्रतिज्ञेन पित्रा तद्वचोऽङ्गीकृत्याज्ञतोऽहं वनं प्रव्रजामीति। प्रायूयुजच्च त्वमिहैव व्रतोपवासतत्परा भरतशत्रुघ्नौ भ्रातृपुत्रसमाववलोकयन्ती यथापूर्वं मे मातृः पितरं च सेवस्वेति।

## सप्तविंशः सर्गः

रामेण मात्रादिसेवार्थमिहैव वसेत्युपदिष्टा सीता कृतप्रणयकोपाऽपि तद्वाक्यस्य जनापहास्यत्वमुपपाद्य भवन्निर्वासनेन ममाऽपि निर्वासनं सिद्धमेवेति प्रदर्शयन्ती चाऽसोढव्यस्ते विरहोऽतो मां सहैव वनं नयेति तमभ्यर्थयामास।

---

( १ ) इसकी टिप्पणी ग्रन्थके आरंभमें देखिये।

## अष्टाविंशः सर्गः

एवं प्रार्थ्यमानां सीतां मृगेन्द्रसरीसृपादिदुष्टजन्तुसत्त्वादशनपानशयनादेरव्यवस्थितत्वाच्च सर्वथा वनवासस्यातिक्लेशयुक्तत्वेन दुःखदत्वं प्रदर्श्य रामस्तस्मात्तां प्रत्यावर्त्तयितुमचेष्टत।

## एकोनत्रिंशः सर्गः

इत्थं भर्त्तुर्वचनं निशम्येषदश्रुमुखी सीता प्राह—नाथ! वने वस्तव्यतां प्रति त्वदुक्तास्ते न दोषाः प्रत्युत त्वया सह स्नेहपुरस्कृता गुणा एवेति विद्धि। अपि च पितुर्गृहे, सामुद्रिकशास्त्रविद्भिर्वनवासोऽस्याः ध्रुवं भावीत्युक्तमतः स समयः प्राप्तोऽद्य त्वया सहाऽवश्यं गमिष्यामीति प्रास्तावीत्। एवं सत्यपि रामः वियोगभीरुस्तां सान्त्ववचोभिः पर्यसान्त्वयत्।

## त्रिंशः सर्गः

अनेकशः सान्त्व्यमानापि सीता रामे परित्राणसामर्थ्यमारोप्य तं गर्हयामास—नाथ! मार्गे त्वया सह कुशकाशशरेषीका ये च कण्टकिनो द्रुमास्ते तूलाजिनसमस्पर्शा भवेयुः। त्वत्याग एव महद्दुःखं भविष्यति सहानुगमने क्लेशलेशोऽपि मयि न स्यादिति प्रतिपाद्य मां परित्यज्य वनं गते त्वय्यहं विषं पीत्वा प्राणांस्त्यक्ष्यामि, किन्तु क्षणमपि परवशा जीवितुं नोत्सह इति प्रास्तावीत्। अथ तेन वशीभूतो रामस्तस्या अनुगमनं स्वीकृत्य वनगमनाय मङ्गलदानादीन्युपपादयितुं तस्यै संदिदेश।

## एकत्रिंशः सर्गः

एवं दम्पत्योः संवादं श्रुत्वा लक्ष्मणो धनुर्धरोऽहं तेऽग्रेसरो भूत्वा गमिष्यामीति राममयाचत। रामस्तु बहुभिः सान्त्ववचनैस्तं न्यषेधीत्। पूर्वं दत्तानुमतिरपि कथमिदानीं निषेधसीति पृष्टे त्वयेहैव स्थित्वा मातृपालनं विधेयमिति बहुशः सान्त्वमानोऽपि लक्ष्मणो मत्सदृशानां परः सहस्रपालनक्षमाणां मातॄणां कोऽहं पालक इति तन्निषेधीत्। अथ रामस्तदनुगमनमनुमत्य वरुणदत्तायुधादीनि गुरुगृहादानयितुं तथात्मीयधनसमर्पणपात्रीभूतान् सुयज्ञादि-ऋषीनानाययितुं च लक्ष्मणं प्रैरिरत्।



# सुधाकर्त्तुः परिचयः

मिथिलादक्षिणे भागे जाह्नव्याश्चैव सन्निधौ ।
ब्राह्मणैः कर्मनिपुणैर्धनिकैश्च सुशोभिता ॥
शास्त्रज्ञैश्च सुविख्याता नद्या च समलङ्कृता ।
एवं सर्वगुणोपेता "बरौनी" वसतिः शुभा ॥
तस्यां वत्सकुलोद्भूतो दयावान् शुचिमांस्तथा ।
"बद्रिनाथात्मजः" श्रीमाँल्लोकनाथेति विश्रुतः ॥
ज्योतिर्विदामग्रगण्यः सर्वलोकप्रियंवदः ।
स चोपयेमे विधिना "गृहमणि" मिश्रकन्यकाम् ॥
तस्यामहं समुत्पन्नः "कृष्णमोहन" संज्ञितः ।
"गैनादिलाल" गुरुतो लब्ध्वा ज्ञानं च शैशवे ॥
काश्यामागत्य बहवो गुरवो मेऽभवंस्ततः ।
तेषां शुश्रूषया किञ्चिज्ज्ञानं प्राप्य च साम्प्रतम् ॥
"सुधां" व्यरचमत्रैनमादाय यदि बालकाः ।
प्रहृष्येयुस्तदा मन्ये सफलश्च मम श्रमः ॥
कण्टकाक्षरदोषेण भ्रमेण यदि वा मम ।
त्रुटिश्चेदिह संशोध्याऽदुष्टत्वं दुर्लभं यतः ॥

शुभं भूयात् ।

# पेज ५२, श्लोक २१ की टिप्पणी

यहां शंका यह होती है कि, एक वर तो देवासुरसंग्रामके समय मिला था और दूसरा कब मिला था ? किसी किसीका मत है कि दोनों एक ही समयके हैं। परन्तु एक ही कारणसे वरद्वयका उपस्थित होना युक्तिसङ्गत प्रतीत नहीं होता। वस्तुतः दोनोंकी कथा-प्रसङ्ग इस प्रकारका है:—

एकदा देवराज इन्द्रका निमन्त्रण पाकर देवासुर-संग्रामके लिये जब महाराज दशरथजी प्रस्तुत हो रहे थे, उस समय महाराजको देवलोकके संग्राममें पहुंचानेवाला कोई सारथी उपस्थित नहीं था। इसलिये महाराज अति चिन्तित हुए, तब महारानी कैकेयीने सारथिनी बनकर उन्हे उस संग्राममें लेजाकर मदद पहुंचायी ( जैसा कि ५२ पेजकी टिप्पणीमें सुधाटीकाकारने लिखा है ) उसीकी खुशीमें महाराजने प्रथम वर मांगनेको कहा।

द्वितीय वरका प्रसङ्ग इस प्रकारका है:—

महाराज दशरथजीका नियम था कि जब तक रामजी (बचपनमें) उनके साथ भोजन नहीं करते थे तबतक महाराज भोजनपर नहीं बैठते। एक दिनकी बात है—मध्यान्हका समय था, महाराज भोजन करनेको आगये पर रामजी अभी तक नहीं आये। कारण यह था कि उस दिन रामजी बच्चोंके साथ खेलमें हार गये थे और अपने साथियोंके दाव चुकानेमें इतने व्यस्त थे कि उन्हे भोजन की सुधि नहीं थी। महाराजका अनेक बार सन्देश गया पर वे नहीं आये। इस तरह अपराह्नका समय हो गया। अन्तमें कैकेयीने कहा—हे महाराज ! यदि आज्ञा हो तो मैं लालनको बुलालाऊँ। महाराज कैकेयीकी तामसी प्रकृतिसे परिचित थे इस लिये उन्होने मना किया और कहा कि कोई कारण ऐसा नहीं है जो तुम्हारे कहनेसे वे आजांयगे। इस पर कैकेयीने तमक कर कहा—हूं: ऐसा आप क्या कह रहे हैं, मेरा लालन, जिसको मैं प्राणोंसे बढ़कर मानती हूँ, मेरे कहने से नहीं आवेगा ? अच्छा मैं अभी उसको बुला लाती हूं। यह कहकर कैकेयी स्वयं वहां गयी, पर रामजी माता कैकेयीको देखकर बाल-सुलभ चापल्यके कारण छिप गये। कैकेयीने बार बार उनसे चलनेको कहा और अन्तमें यह भी कहा—देखो लालन, यदि अब तू नहीं चलेगा तो मैं जलकर खाक हो जाऊँगी, पर महाराजके सामने खाली नहीं लौटूंगी। इत्यादि कहने पर भी जब रामजी चलनेको तैयार नहीं हुए, तब कैकेयीने नौकरोंको चिता सजानेका आदेश दिया और जलनेके लिये चितापर बैठ गयी। विमाता कैकेयीके इस प्रकारका दुःसाहस देखकर रामजीसे नहीं रहा गया, वे दौड़कर चिताके पास आकर कहने लगे—हे माताजी ! चलिये मैं चलनेको तैयार हूं। उसीकी खुशीमें महाराजने ( द्वितीय ) वर मांगनेको कहा।

---

॥ श्रीहरिः ॥

# रामवनगमनम्

## सुधा-इन्दुमती-संस्कृत-हिन्दी-टीकाद्वयोपेतम् ।

---

### अथ मातृ-दर्शनम् ।

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने ।
कौशल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥

सर्वारिष्टहरं सुखैकरमयं श्रीसीतया शोभितं
मेघश्यामतनं प्रसन्नवदनं श्रीलक्ष्मणेनान्वितम् ।
कारुण्यामृतसागरं भवभयध्वंसैकबीजं परं
वन्देऽहं रघुनायकं प्रभुवरं भूपालचूडामणिम् ॥
सुधां व्याख्यां करोम्यस्य शिशुछात्रहितैषिणीम् ।
कृष्णमोहनशर्माऽहं लोकनाथात्मजोऽल्पधीः ॥

अन्वयः—पितुः निर्देशपालने, व्यवसितं, धर्मिष्ठं, तं, समीक्ष्य, बाष्पसंरुद्धा (सती) कौशल्या, वचः, अब्रवीत् ।

सुधा—पितुः = राज्ञो दशरथस्य, निर्देशपालने = आज्ञापितकरणे व्यवसितं = कृतनिश्चयम्, धर्मिष्ठम् = अतिशयेन धर्मवन्तम्, तं = श्रीरामम्, समीक्ष्य = निश्चित्य ज्ञात्वेति यावत् । बाष्पसंरुद्धा = बाष्पमन्तरुष्मा तेन संरुद्धा अवरुद्धा, (सती) कौशल्या = राममाता, वचः = वक्ष्यमाणवचनम्, अब्रवीत् = अवोचत् ॥

श्रीजानकीचरणकञ्जमरन्दभृङ्ग-श्रीरामचन्द्रसुकृती जनतोपकृत्यै ।
टीकान्तनोति वचसा सरलातिरम्यां स्वर्गश्रितोञ्च मनसेन्दुमतीं दधानः ॥

इन्दुमती—( तदनन्तर, आवेशमें आये हुए छोटे भाई लक्ष्मणको समझा-बुझाकर शान्त करनेके बाद ) जब माता कौशल्याने देखा कि धर्मिष्ठ श्रीरामचन्द्र-जी पिताकी आज्ञा ( १४ वर्षका वनवास ) पालन करनेके लिये उद्यत हो गये हैं तब उनके नेत्रोंमें आंसू उमड़ आया, वे गद्गद कंठसे ( रामजीको ) कहने लगीं—॥

क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् ।
गुणवान् दयितो राज्ञः काकुत्स्थो यद्विवास्यते ॥ ४ ॥

अन्वयः—गुणवान्, राज्ञः, दयितः, काकुत्स्थः, यद्, विवास्यते, एतत्, कः, श्रद्धेत्, वा, श्रुत्वा, कस्य, भयम्, न भवेत् ॥

सुधा—गुणवान् = गुणयुक्तः, राज्ञः = दशरथस्य, दयितः=अत्यन्तप्रियतमः, काकुत्स्थः = श्रीरामः, यद् = यस्मात् कारणात्, विवास्यते = ( वनं ) प्रेष्यते एतद्=एतादृशं ( वचः ), कः ( जनः ), श्रद्धेत्=गुणवत् प्रियपुत्रविवासनं समीचीनं मन्येत, असम्भावितत्वादिति भावः । वा = अथवा, श्रुत्वा = आकर्ण्य, ( श्रद्धेयत्वे, ) कस्य = अयोध्यावासिनो जनस्य, भयं = रामगमने कथमत्रत्यानां जीवनमिति भीतिः, न भवेत् = न स्यात् ? अपि तु सर्वस्याऽपि स्यादेवेति भावः । यद्वा—रामविवासनं सत्यमिति ज्ञात्वा स्वपित्रादिभ्यो ममाऽप्येवं भविष्यतीति कस्य हृदये भयं न भवेत् ? अपि तु भवेदेवेत्याशयः ॥

इन्दुमती—( पुनश्च कौशल्याने कहा हे वत्स ! ) चक्रवर्ती महाराज दशरथ अपने अत्यन्त प्रिय पुत्र राम को ( १४ वर्षके लिये ) देशसे निर्वासित कररहे हैं, यह समाचार सुनकर, इसपर कौन विश्वास करेगा और इस समाचारसे किसको भय नहीं होगा अर्थात् जो कोई इस समाचारको सुनेगा वही भयभीत हो उठेगा और कहेगा कि जब महाराजने सर्वगुण सम्पन्न अपने प्रियपुत्र निरपराधी श्रीरामजीको कैकेयीके कहनेसे देशसे निकाल दिया है तो निश्चय ही महाराजकी बुद्धि मारी गयी है, अब मेरी रक्षा भी इस राज्यमें नहीं हो सकेगी अथवा जब महाराजके ऐसे श्रेष्ठ जनने भी अपने पुत्रको निकालदिया है तब हमारे पिता तो हमें घरमें क्यों रहने देंगे ॥

नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥

अन्वयः—सर्वम्, आदिशन्, ( सन् ) कृतान्तः, तु, लोके, नूनं, बलवान्, यत्र, राम, लोके, अभिरामः, त्वं, वनं, गमिष्यसि ।

सुधा—सर्वं = सुखदुःखादिकम्, आदिशन्=प्रदिशन्, ( सन् ) कृतान्तः= दैवम्, तु, लोके = इह संसारे, नूनं = निश्चितं, बलवान् = पराक्रमशाली, "इत्यहं मन्ये" इति शेषः । यत्र = दैवे निमित्ते, हे राम !, लोके = संसारे, अभिरामः= मनोज्ञः, त्वं, वनं = विपिनं, गमिष्यसि = व्रजिष्यसि । यद्वा—हे राम ! अभि-

तिसपर यदि तुम भी महाराजको छोड़कर वन चलोगी तो महाराज कभी भी जीवित नहीं रह सकेंगे ॥

**भर्त्तुः पुनः परित्यागो नृशंसः केवलं स्त्रियाः ।**
**स भवत्या न कर्त्तव्यो मनसाऽपि विगर्हितः ॥ १२ ॥**

अन्वयः—भर्त्तुः, परित्यागः, स्त्रियाः, केवलं, नृशंसः, पुनः, मनसापि, स, भवत्या, न, कर्त्तव्यः, ( यतः ) विगर्हितः ।

सुधा—भवत्या कथमपि राजा न परित्याज्य इत्युक्तं तत्र हेतुमाह—भर्त्तुरिति । भर्त्तुः=स्वामिनः, परित्यागः = परिवर्जनं, स्त्रियाः = नार्याः, केवलं, नृशंसः =क्रूरतैव, पुनः=किल, न तु तेनैहिकमामुष्मिकं वा किञ्चिदपि सुखमित्यर्थः। मनसाऽपि=हृदयेनाऽपि, स परित्यागः, भवत्या = त्वया, न कर्त्तव्यः =न चिन्तनीयः, ( यतः ) विगर्हितः =महापापजनकत्वादतिनिन्दितः ॥

इन्दुमती—( रामचन्द्रजीने माता कौशल्यासे कहा—हे माताजी ! महाराजको छोड़कर आप मेरे साथ वन जाना चाहती हैं सो ठीक नहीं क्योंकि-) स्वामीका परित्याग करना स्त्रीके लिये सबसे बढ़कर निन्द्य कर्म है । सो ऐसा निन्द्यकर्म करनेकी कल्पना भी आपको मनमें नहीं करना चाहिये ( क्योंकि-तुष्टे भर्तरि नारीणां सन्तुष्टाः सर्वदेवताः ) ॥

**यावज्जीवति काकुत्स्थः पिता मे जगती पतिः ।**
**शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३ ॥**

अन्वयः—काकुत्स्थः, जगतीपतिः, मे, पिता, यावत्, जीवति, तावत्, शुश्रूषा, क्रियतां, हि, सनातनः, स धर्मः, "वर्त्तत इति शास्त्रकारैः गीयत" इति शेषः ।

सुधा—अतः किं कर्त्तव्यमित्यत आह—यावदिति । काकुत्स्थः=ककुत्स्थवंशोद्भवः, जगतीपतिः=पृथिवीपतिः, मे =मम रामचन्द्रस्य, पिता-जनकः राजा दशरथ इत्यर्थः । यावत्=यावत्कालपर्यन्तं, जीवति प्राणान् धारयति, इह प्रजाः पालयति वा, तावत्=तावत्कालपर्यन्तं, शुश्रूषा =सेवा, क्रियतां =विधीयताम्, ह=यतः, सनातनः=सार्वकालिकः, स, धर्मः =स्वामिसेवापालनरूपः, वर्त्तत इति शास्त्रकारैः गीयत इति शेषः । तस्माद्भवत्या भर्त्तृशुश्रूषणं न परित्याज्यमित्याशयः ॥ अत्र "यावज्जीवति तावच्छुश्रूषा क्रियता"मित्यनेन पितुर्लोकान्तरगमनावश्यकत्वं ध्वनितम् ॥

**अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।**
**मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत् ॥ २ ॥**

**अन्वयः**—दशरथात्, मयि, जातः, सर्वभूतप्रियंवदः, अदृष्टदुःखः, धर्मात्मा, ( रामः ) उञ्छेन, कथं, वर्त्तयेत् ॥

**सुधा**—तद्वचनमेवाह—**अदृष्टेति** । दशरथात् = दशदिक्षु अप्रतिहतो रथो यस्य स तथोक्तः चक्रवर्त्तीत्यर्थः, तस्मात् । मयि = कौशल्यायाम्, जातः = प्रकटीभूतः, सर्वभूतप्रियंवदः = निखिलप्राणिप्रियवक्ता ( सर्वभूतेषु निखिलप्राणिषु प्रियं मधुरं वदतीत्येवं शीलः), अदृष्टदुःखः = अनवलोकितक्लेशः, अद्यप्रभृतिकदाप्यननुभूतदुःख इति यावत् । धर्मात्मा=धर्मस्वरूपः, ( सः=तादृशो भवान् रामः ) उञ्छेन=दैवात् क्षेत्रादिषु प्रकीर्णानां व्रीह्यादिधान्यानामङ्गुल्या एकैकशो ग्रहणमुञ्छस्तेन तथोक्तेन, फलमूलाद्याहरणादीनामुपलक्षणञ्चैतत् । कथं = केन प्रकारेण, वर्त्तयेत् = जीवेत् ॥

**इन्दुमती**—( कौशल्याजीने कहा हे वत्स राम ! ) जिसने कभी दुःखका अनुभव नहीं किया और धर्म-पथपर चलनेवाला है एवं सबसे प्रिय वचन बोलने वाला है और चक्रवर्ती महाराज दशरथके औरस तथा मेरे (महारानी कौशल्याके) गर्भसे उत्पन्न हुआ है, वह ( राजकुमार राम ) वनमें ( १४ वर्षतक ) किस प्रकार उञ्छवृत्ति ( खेतमें बिखरे हुए दानेको चुन-चुनकर ऋषियों की तरह ) से निर्वाह कर सकेगा ॥

**यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते ।**
**कथं स भोक्ष्यते रामो वने मूलफलान्ययम् ॥ ३ ॥**

**अन्वयः**—यस्य, भृत्याः, च, दासाः, च, मृष्टानि, अन्नानि, भुञ्जते, सः, अयम्, रामः, वने, मूलफलानि, कथं भोक्ष्यते ॥

**सुधा**—यस्य = तव, श्रीरामस्य, भृत्याः = भटाः, च = पुनः, दासाः = दास्यकराः, मृष्टानि = श्लाघ्यानि, अन्नानि = भक्ष्यद्रव्याणि उपस्कृतमांसादीनि, भुञ्जते=खादन्ति, सः=तादृशो राजपुत्रः, अयम्=भवान्, वने=दण्डकारण्ये, मूल फलानि = कन्दफलानि, कथं = केन प्रकारेण, भोक्ष्यते = खादयिष्यति ॥

**इन्दुमती**—( माताकौशल्याने अधीर होकर फिर कहा हे वत्स ! ) जिसके नौकर-चाकर मिष्टान्न ( सुस्वादु ) भोजन करते हैं, वह ( मेरा राजकुमार ) राम किस तरहसे वनमें कन्दमूल फल खायगा ॥

क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद् भयम्।
गुणवान् दयितो राज्ञः काकुत्स्थो यद्विवास्यते ॥ ४ ॥

अन्वयः—गुणवान्, राज्ञः, दयितः, काकुत्स्थः, यद्, विवास्यते, एतत्, कः, श्रद्दधेत्, वा, श्रुत्वा, कस्य, भयम्, न भवेत् ॥

सुधा—गुणवान् = गुणयुक्तः, राज्ञः = दशरथस्य, दयितः=अत्यन्तप्रियतमः, काकुत्स्थः = श्रीरामः, यद् = यस्मात् कारणात्, विवास्यते = ( वनं ) प्रेष्यते एतद्=एतादृशं ( वचः ), कः ( जनः ), श्रद्दधेत्=गुणवत् प्रियपुत्रविवासनं समीचीनं मन्येत, असम्भावितत्वादिति भावः। वा = अथवा, श्रुत्वा = आकर्ण्य, ( अश्रद्धेयत्वे, ) कस्य = अयोध्यावासिनो जनस्य, भयं = रामगमने कथमत्रत्यानां जीवनमिति भीतिः, न भवेत् = न स्यात् ? अपि तु सर्वस्याऽपि स्यादेवेति भावः। यद्वा—रामविवासनं सत्यमिति ज्ञात्वा स्वपित्रादिभ्यो ममाऽप्येवं भविष्यतीति कस्य हृदये भयं न भवेत् ? अपि तु भवेदेवेत्याशयः ॥

इन्दुमती—( पुनश्च कौशल्याने कहा हे वत्स ! ) चक्रवर्ती महाराज दशरथ अपने अत्यन्त प्रिय पुत्र राम को ( १४ वर्षके लिये ) देशसे निर्वासित कररहे हैं, यह समाचार सुनकर, इसपर कौन विश्वास करेगा और इस समाचारसे किसको भय नहीं होगा अर्थात् जो कोई इस समाचारको सुनेगा वही भयभीत हो उठेगा और कहेगा कि जब महाराजने सर्वगुण सम्पन्न अपने प्रियपुत्र निरपराधी श्रीरामजीको कैकेयीके कहनेसे देशसे निकाल दिया है तो निश्चय ही महाराजकी बुद्धि मारी गयी है, अब मेरी रक्षा भी इस राज्यमें नहीं हो सकेगी अथवा जब महाराजके ऐसे श्रेष्ठ जनने भी अपने पुत्रको निकालदिया है तब हमारे पिता तो हमें घरमें क्यों रहने देंगे ॥

नूनं तु बलवाँल्लोके कृतान्तः सर्वमादिशन्।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥

अन्वयः—सर्वम्, आदिशन्, ( सन् ) कृतान्तः, तु, लोके, नूनं, बलवान्, यत्र, राम, लोके, अभिरामः, त्वं, वनं, गमिष्यसि।

सुधा—सर्वं = सुखदुःखादिकम्, आदिशन्=प्रदिशन्, ( सन् ) कृतान्तः= दैवम्, तु, लोके = इह संसारे, नूनं = निश्चितं, बलवान् = पराक्रमशाली, "इत्यहं मन्ये" इति शेषः। यत्र = दैवे निमित्ते, हे राम !, लोके = संसारे, अभिरामः= मनोज्ञः, त्वं, वनं = विपिनं, गमिष्यसि = व्रजिष्यसि। यद्वा—हे राम ! अभि-

रामस्त्वं यत्र=लङ्कायां षदर्थं, गमिष्यसि स कृतान्तः=धर्मध्वंसकर्त्ता रावणः, सर्वं जनम्, आदिशन्=स्वाज्ञाविषयीभूतं कुर्वन्, लोके=इह पृथिव्यां, बलवान्, इत्यहं लोके=जाने, एतेन सावधानतया त्वया वर्त्तितव्यमिति ध्वनितम्। इह पृथिव्यामित्यनेन तव सम्मुखे परमार्थतो न बलवानिति ध्वनितम् ॥

**इन्दुमती—**(भाग्यके ऊपर पश्चात्ताप करती हुई माता कौशल्याने फिर कहा हे वत्स ! ) जब समस्त कोशलराज्यके सर्वप्रिय तुम ( राम ) वन जाओगे तब सुख-दुःखके नियमनकर्त्ता भाग्य ही को निश्चित रूपेण सब से बड़ा मानना पड़ेगा ॥

**अयं तु मामात्मभवस्तवादर्शनमारुतः।**
**विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥**
**चिन्तावाष्पमहाधूमस्तवागमनचिन्तजः।**
**कर्षयित्वाऽधिकं पुत्र ! निःश्वासायाससम्भवः ॥ ७ ॥**
**त्वया विहीनामिह मां शोकाग्निरतुलो महान्।**
**प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥**

**अन्वयः—**हे पुत्र ! तु, आत्मभवः, तव, अदर्शनमारुतः, विलापदुःखसमिधः, रुदिताश्रुहुताहुतिः, तव, आगमनचिन्तजः, चिन्तावाष्पमहाधूमः, निःश्वासायाससम्भवः, महान्, अतुलः, शोकाग्निः, माम्, अधिकं, कर्षयित्वा, हिमात्यये, चित्रभानुः, कक्षं, यथा, ( तथा ) प्रधक्ष्यति।

**सुधा—**सम्प्रति त्वद्वियोगजनितं दुःखं सोढुमशक्यमिति बोधयन्ती आह—अयमिति। "अयं तु" इत्यारभ्य "हिमात्यये" इत्यन्तं श्लोकत्रयमेकान्वयि विशेषकमित्युच्यते। तदुक्तम्—"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥" इति। (व्याख्या) हे पुत्र=हे राम !, तु=किन्तु, आत्मभवः=स्वमनःप्रादुर्भूतः, तवादर्शनमारुतः=तव-भवतः, अदर्शनम्-अनवलोकनमेव वर्द्धकत्वात् मारुतो-वायुर्यस्य सस्तथोक्तः, विलापदुःखसमिधः=विलापदुःखं-प्रलापजं क्लेशः, तदेव समित्-इन्धनं यस्य सस्तादृशः। रुदिताश्रुहुताहुतिः-रुदिताश्रूणि-रोदनजन्यनेत्रजलानि, तान्येव हुता-प्रक्षिप्ता, आहुतिर्यस्य सस्तथोक्तः। चिन्तावाष्पमहाधूमः=चिन्तावाष्पं-चिन्तनोष्मा, स एव, महाधूमो यस्य सस्तथोक्तः। तवागमनचिन्तजः=तव-भवतः, आगमनचिन्तजः-अतिक्लेशजनकदूरदेशगमनोत्तरं कथमयमागमिष्यतीति चिन्तन

जनितः । निश्वासायाससम्भवः = निःश्वासासेन-निःश्वासरूपपरिश्रमेण सन्धुक्षणात्, सम्भवः-बृद्धिर्यस्य स तादृशः । महान् = अतिबृद्धः, ( अत एव ) अतुलः = इयत्तां विधातुमशक्यः, शोकाग्निः = शोकरूपवह्निः, इह शरीरे, त्वया = जलस्थानीयेन भवता, विहीनां = वियुक्तां, मां = कौशल्यां, तव मातरमित्यर्थः । मां=रज्यलक्ष्मीञ्च, "इन्दिरालोकमाता मा क्षीरोदतनयारमा" इत्यमरः । अधिकम्= अत्यर्थं यथा स्यात्तथा । कर्शयित्वा = क्लेशप्रापणेन शुष्कीकृत्य कृशां विधायेति यावत् । हिमात्यये = हिमध्वंससमये ग्रीष्मे इति यावत् । कक्षं = गुल्मलतादिकमित्यर्थः । चित्रभानुः = वन्योऽग्निः, सूर्यो वा, ( स ) यथा, प्रधक्ष्यति = भस्मीकरिष्यति । प्रज्ज्वलितवह्नेरुपशान्तिर्यथा जलेनैव भवति तथैव तवागमनेन जलस्थानीयेन मम शोकाग्नेरुपमो भविष्यतीत्याशयः ॥

इन्दुमती—( पुत्रवियोग होनेपर अपनी स्थितिका स्वरूप बताती हुई माता कौशल्याने कहा- ) हे वत्स राम ! तुम्हारे वन चले जानेपर मेरे मनकी शोकाग्नि तुम्हारे अदर्शनरूपी वायुसे सुलग उठेगी और विलाप तथा दुःख इन्धन ( लकड़ी ) एवं रोदनाश्रुरुपी घृतके पड़नेसे प्रज्वलित हो जायगी तब उससे चिन्तारूपी धूम निकलेगा और वह मुझे सुखाकर उसी तरह भस्मसात् कर देगा जिस तरह हिम ( जाड़े ) के पश्चात् ग्रीष्म आनेपर वृक्षोंकी रगड़ से उत्पन्न दावानल वनके लता-पत्रादिकों को भस्म कर देता है ॥

**कथं हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति ।**
**अहं त्वाऽनुगमिष्यामि यत्र वत्स ! गमिष्यसि ॥ ६ ॥**

**अन्वयः**—हि, गच्छन्तं, स्वं, वत्सं, धेनुः, कथम्, अनुगच्छति, ( तथा ) हे वत्स ! यत्र गमिष्यसि, अहं, ( तत्र ) त्वा, अनुगमिष्यासि ।

**सुधा**—हि = यतः, गच्छन्तं = व्रजन्तं, स्वम् = आत्मीयं, वत्सं = पुत्रं, धेनुः = गौः, कथं = यथा, अनुगच्छति = अनुव्रजति ( तथा ) हे वत्स ! यत्र = यस्मिन् स्थाने, ( त्वं ) गमिष्यसि = व्रजिष्यसि, अहं = कौशल्या, तव माता, ( तत्र ) त्वा = त्वाम्, अनुगमिष्यामि = अनुव्रजिष्यामि । अत्र कथं शब्दो हि यथार्थकः, अत एवोत्तरार्द्धे तथेत्यध्याहार्यम् । त्वेत्यार्षत्वात् प्रयोगो ज्ञेयः । तथा च यत्र यत्र स्वकीयो वत्सो गच्छति तत्र तत्र तदनु यथा गौरनुगच्छति तथैव यत्र यत्र त्वं गन्ताऽसि तत्र तत्राऽहमनुगमिष्यामीति सरलार्थः ॥

**इन्दुमती**—( अन्तमें माता कौशल्याने कहा— ) हे वत्स ! जिस प्रकार

गाय अपने बछड़ेके पीछे २ चलती रहती है ( अपनी आँखोंके सामनेही बछड़ेका रहना पसन्द करती है ) उसी प्रकार मैं तुह्मारे पीछे २ जहाँ तुम जाओगे वहाँ मैं भी चलूंगी ( तुम वनजाओगे तो मैं भी तुह्मारे साथ चलूंगी। तुह्मारे विना मैं नहीं रह सकूंगी ) ॥

**यथा निगदितं मात्रा तद्वाक्यं पुरुषर्षभः।**
**श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥**

**अन्वयः**—पुरुषर्षभः, रामः, मात्रा, यथा, निगदितं, तद्वाक्यं, श्रुत्वा, भृशदुःखितां, मातरं, वाक्यम् , अब्रवीत्।

**सुधा**—मातृवचनश्रवणानन्तरकालिकोदन्तमाह—यथेति। पुरुषर्षभः = पुरुषश्रेष्ठः, रामः = कौशल्यानन्दनः, मात्रा = कौशल्यया, यथा = येन प्रकारेण, निगदितं = कथितं, तद्वाक्यं = तद्वचः, श्रुत्वा = आकर्ण्य, भृशदुःखितां = निश्चितवियोगजनितक्लेशाक्रान्तां, मातरं = जननीं, वाक्यं = वक्ष्यमाणवचनम् , अब्रवीत् = उक्तवान्। **यथा निगदित**मित्यनेन स्ववाचोऽप्यगोचरत्वं दर्शितं मुनिना ॥

**इन्दुमती**—पुरुषश्रेष्ठ श्रीरामचन्द्रजीने माता कौशल्याकी तथा कथित ( तुह्मारे विना मैं नहीं रह सकूँगी, तुम वन चलोगे तो मैं भी तुह्मारे साथ चलूँगी इत्यादि ) बातोंको सुनकर अत्यन्त दुःखिनी मातासे कहने लगे— ॥

**कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते।**
**भवत्या च परित्यक्तो न नूनं वर्त्तयिष्यति ॥ ११ ॥**

**अन्वयः**—कैकेय्याः, वञ्चितः, राजा, मयि, आरण्यं, च, आश्रिते, च, भवत्या, परित्यक्तः, नूनं, न, वर्त्तयिष्यति।

**सुधा**—कैकेय्या = एतन्नामिकया मद्विमात्रा, वञ्चितः = प्रतारणया मद्वियोगजदुःखं प्रापितः, राजा = दशरथः, मयि = रामे, आरण्यं = वनम् , च आश्रिते = गते सतीत्यर्थः, च = पुनः, भवत्या = त्वया, परित्यक्तः = परिवर्जितः, नूनं = निश्चितं, न = नहि, वर्त्तयिष्यति = न जीविष्यति, अतो भर्त्तुः प्राणरक्षणं भवत्याऽवश्यमेव विधेयमिति भावः ॥

**इन्दुमती**—( रामचन्द्रजीने माता कौशल्यासे कहा— ) हे माता जी! इस समय महाराज (पिताजी) को मेरी विमाता कैकेयीने वञ्चित कर दिया है ( धोखा देकर दुःखी बना दिया है ) मेरे वन चले जानेपर वे और भी दुःखी होंगे,

तिसपर यदि तुम भी महाराजको छोड़कर वन चलोगी तो महाराज कभी भी जीवित नहीं रह सकेंगे ॥

**भर्त्तुः पुनः परित्यागो नृशंसः केवलं स्त्रियाः ।**
**स भवत्या न कर्त्तव्यो मनसाऽपि विगर्हितः ॥ १२ ॥**

**अन्वयः**—भर्त्तुः, परित्यागः, स्त्रियाः, केवलं, नृशंसः, पुनः, मनसापि, स, भवत्या, न, कर्त्तव्यः, ( यतः ) विगर्हितः ।

**सुधा**—भवत्या कथमपि राजा न परित्याज्य इत्युक्तं तत्र हेतुमाह—**भर्त्तु-रिति** । भर्त्तुः = स्वामिनः, परित्यागः = परिवर्जनं, स्त्रियाः = नार्याः, केवलं, नृशंसः = क्रूरतैव, पुनः=किल, न तु तेनैहिकमामुष्मिकं वा किञ्चिदपि सुखमित्यर्थः। मनसाऽपि = हृदयेनाऽपि, स परित्यागः, भवत्या = त्वया, न कर्त्तव्यः = न चिन्तनीयः, ( यतः ) विगर्हितः = महापापजनकत्वादतिनिन्दितः ॥

**इन्दुमती**—( रामचन्द्रजीने माता कौशल्यासे कहा—हे माताजी ! महाराजको छोड़कर आप मेरे साथ वन जाना चाहती हैं सो ठीक नहीं क्योंकि–) स्वामीका परित्याग करना स्त्रीके लिये सबसे बढ़कर निन्द्य कर्म है । सो ऐसा निन्द्यकर्म करनेकी कल्पना भी आपको मनमें नहीं करना चाहिये ( क्योंकि-तुष्टे भर्तरि नारीणां सन्तुष्टाः सर्वदेवताः ) ॥

**यावज्जीवति काकुत्स्थः पिता मे जगती पतिः ।**
**शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३ ॥**

**अन्वयः**—काकुत्स्थः, जगतीपतिः, मे, पिता, यावत्, जीवति, तावत्, शुश्रूषा, क्रियतां, हि, सनातनः, स धर्मः, "वर्त्तत इति शास्त्रकारैः गीयत" इति शेषः ।

**सुधा**—अतः किं कर्त्तव्यमित्यत आह—**यावदिति** । काकुत्स्थः=ककुत्स्थ-वंशोद्भवः, जगतीपतिः=पृथिवीपतिः, मे = मम रामचन्द्रस्य, पिता-जनकः राजा दशरथ इत्यर्थः । यावत् = यावत्कालपर्यन्तं, जीवति प्राणान् धारयति, इह प्रजाः पालयति वा, तावत्=तावत्कालपर्यन्तं, शुश्रूषा = सेवा, क्रियतां = विधीयताम्, ह=यतः, सनातनः=सार्वकालिकः, स, धर्मः = स्वामिसेवापालनरूपः, वर्त्तत इति शास्त्रकारैः गीयत इति शेषः । तस्माद्भवत्या भर्त्तृशुश्रूषणं न परित्याज्यमित्याशयः ॥ अत्र "यावज्जीवति तावच्छुश्रूषा क्रियता"मित्यनेन पितुर्लोकान्तरगमनावश्यकत्वं ध्वनितम् ॥

**इन्दुमती**—( रामचन्द्रजीने कहा- ) जब तक ककुत्स्थ वंशमें उत्पन्न मेरे पिता चक्रवर्ती महाराज ( दशरथ ) जीवित हैं, तब तक आप ( मेरी माता कौशल्या ) उनकी सेवा करें ( मेरे साथ वन जानेका विचार छोड़ दें ) आपके लिये यही सनातन धर्म है ॥

**एवमुक्ता तु रामेण कौशल्या शुभदर्शना ।**
**तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥**

**अन्वयः**—रामेण, एवम्, उक्ता, तु, शुभदर्शना, सुप्रीता, कौशल्या, अक्लिष्टकारिणं, रामं, तथा, इति, उवाच ।

**सुधा**—रामेण=कौशल्यातनयेन, एवं = पूर्वोक्तप्रकारेण उक्ता=कथिता, तु, शुभदर्शना = धर्म्यमतिः, सुप्रीता = सुप्रसन्ना, कौशल्या, अक्लिष्टकारिणम्=उत्तमकर्मविधायिनं कस्याऽपि जनस्य क्लेशादायिनमित्यर्थः । रामम् = आत्मतनयम्, तथा=यथा त्वं कथयसि तथैव विधास्ये इति =एवम्, उवाच=उक्तवती ॥

**इन्दुमती**—( महर्षि बाल्मीकिजी कहते हैं कि- ) इस प्रकार रामचन्द्र जीके समझानेपर धर्ममें विश्वास रखने वाली महारानी माता कौशल्या ने रामजी की बात मान ली ( बन जानेका विचार छोड़ दिया ) और प्रसन्न हो कर बोली- ( हे वत्स ! ) बड़ेसे बड़े कठिन कार्यको सहजमें करने वाले तुम जो कुछ कहते और करते हो सब ठीक है ( वैसा ही होगा ) ॥

**एवमुक्तस्तु वचनं रामो धर्मभृतां वरः ।**
**भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥**

**अन्वयः**—एवं वचनं, ( तया ) उक्तः, तु, धर्मभृतां, वरः, रामः, भृशदुःखितां, तां, मातरं, भूयः, वाक्यम्, अब्रवीत् ।

**सुधा**—दार्ढ्यार्थं पुनरुपपादयति—एवमिति । एवं=भर्त्तृशुश्रूषाङ्गीकाररूपं, वचनं=वाक्यं, (तया) उक्तस्तु=श्रावितस्तु, धर्मभृतां = धर्मिष्ठानां, वरः=श्रेष्ठः, रामः, भृशदुःखितां = निश्चितवियोगस्मृतिजनितदुःखाक्रान्तां, मातरं=कौशल्यां, भूयः=पुनः, वाक्यं = वक्ष्यमाणवचनम्, अब्रवीत्=उक्तवान् ॥

**इन्दुमती**—( रामजीके समझाने पर जब कौशल्याने वनजानेका विचार छोड़कर महाराजकी सेवा स्वीकार करली तब रामजी बहुत प्रसन्न हुए और ) इस प्रकार माता कौशल्याका वचन ( स्वीकारोक्ति ) सुनकर धार्मिकश्रेष्ठ श्रीरामचन्द्रजी अत्यन्त दुःखिनी मातासे पुनः कहने लगे- ॥

**मया चैव भवत्या च कर्त्तव्यं वचनं पितुः ।**
**राजा भर्त्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥**

**अन्वयः**—पितुः, वचनं, मया, भवत्या, च, कर्त्तव्यम्, एव, ( यतः ) राजा, भर्त्ता, गुरुः, श्रेष्ठः, प्रभुः, सर्वेषाम् ईश्वरः "अस्ती" ति शेषः ।

**सुधा**—पितुः = तातस्य, वचनं = वाक्यं, मया=रामेण, भवत्या = त्वयाऽपि च, कर्त्तव्यमेव = पालनीयमेव, उभयोस्तद्वचनावश्यकर्त्तव्यत्वे हेतुमुपपादयितुमाह—**राजेति** । अत्रोत्तरार्द्धे 'सः' इत्यध्याहर्त्तव्यम् । तथा च सः=मम पिता, राजा = भूपतिः, भर्त्ता = विधिवद्भवत्याः पाणिग्रहीता, गुरुः=ममतत्त्वोपदेष्टा, तवाऽपि ( पतिरेको गुरुः स्त्रीणाम् ) इति नियमाद्गुरुः, श्रेष्ठः=महात्मा, प्रभुः = सकलसामर्थ्यसम्पन्नः, सर्वेषां=मानवानाम्, ईश्वरः=पूज्यः ॥

**इन्दुमती**—( रामचन्द्रजीने कहा-) हे माता जी ! जैसे मुझे अपने पिता (महाराज दशरथ) की आज्ञा अवश्य माननी चाहिये वैसे आपको भी चाहिये क्यों कि महाराज मेरे पिता हैं तथा मेरे और आपके ( पतिरेको गुरुः स्त्रीणाम् ) गुरु हैं । इस लिये दोनों के श्रेष्ठ हैं तथा सबके पालन-पोषण करने वाले स्वामी और प्रभु हैं* ।

**इमानि तु महारण्ये विहृत्य नव पञ्च च ।**
**वर्षाणि परमप्रीत्या स्थास्यामि वचने तव ॥ १७ ॥**

**अन्वयः**—महारण्ये, इमानि, नव, पञ्च, च, वर्षाणि, विहृत्य, परमप्रीत्या, तव, वचने, स्थास्यामि ।

**सुधा**—पितुर्निर्देशपालनानन्तरं त्वच्छुश्रूषाऽपि करिष्यामीत्याह-**इमानीति** । महारण्ये=दण्डकसंज्ञिते महाविपिने, इमानि = एतानि, नव पञ्च च मिलित्वा चतुर्दश, वर्षाणि=हायनानि, विहृत्य=विहारं कृत्वा, परमप्रीत्या=अतिप्रेम्णा, तव=भवत्याः, वचने=आज्ञापिते, स्थास्यामि=तद्विधास्यामीत्यर्थः । अत्र विहृत्येत्यनेन वनगमनस्य स्वप्रीतिविषयीभूतत्वं दर्शितं, तेन भवत्या विषादो न विधेय इति व्यञ्जितम् ॥

**इन्दुमती**—( रामचन्द्रजी ने कहा हे माताजी ! आप दुःखी मत होइये )

---

* नोटः—तात्पर्य यह है कि मैं उनकी आज्ञा से वन जा रहा हूँ और आपको वनजानेकी आज्ञा नहीं मिली है, अतः आपने जो हमारे साथ वनजानेका विचार स्थगित किया है सो समुचित है ॥

मैं इन चौदहों वर्षोंको घोर जङ्गलमें (भी) विहार करके (अत्यन्त खुशीसे) बिताकर आजाऊँगा और तब जो आप कहेंगी वही करुंगा ॥

**एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा।**
**उवाच परमार्त्ता तु कौशल्या सुतवत्सला ॥ १८ ॥**

**अन्वयः**—एवं, तु, ( पुत्रेण ) उक्ता, तदा, सुतवत्सला, परमार्त्ता, बाष्पपूर्णानना, कौशल्या, प्रिय, पुत्रम् , उवाच।

**सुधा**—एवम् = उक्तप्रकारेण, तु, ( पुत्रेण ) उक्ता=कथिता, तदा=तस्मिन् समये, सुतवत्सला=पुत्रविषयकातिवात्सल्ययुक्ता, परमार्त्ता=अतिखिन्ना, बाष्पपूर्णानना = बाष्पेण=नयनजलेन, पूर्णम्-व्याप्तम् आननं=मुखं, यस्याः सा तथोक्ता, "आननं लपनं मुखम्" इत्यमरः। कौशल्या, प्रियं=स्नेहिनं, पुत्रं=रामम्, उवाच = उक्तवती। एतेन वियोगजनितक्लेशस्य दुर्निवारत्वं ध्वनितम् ॥

**इन्दुमती**—अपने प्रिय पुत्रके इन ( पिताकी आज्ञा पालन करनेके बाद जो आप कहेंगी वही करूंगा इत्यादि ) वचनोंको सुनकर दुःखोंको नहीं सहन करने वाली महारानी कौशल्याके नेत्रोंसे ( पुनः ) छल-छल आँसू बहने लगे। वे अश्रुपूर्ण मुखसे ( आँसू बहाती हुई ) रामचन्द्रजीसे कहने लगीं-॥

**आसां राम! सपत्नीनां वस्तुं मध्ये न मे क्षमम्।**
**नय मामपि काकुत्स्थ! वनं वन्यां मृगीमिव ॥ १९ ॥**
**यदि ते गमने बुद्धिः कृता पितुरपेक्षया।**

**अन्वयः**—हे राम! आसां, सपत्नीनां, मध्ये, वस्तुं, मे न, क्षमम्, (अतः) हे काकुत्स्थ! पितुः, अपेक्षया, यदि, ते, गमने, बुद्धिः, कृता, ( तर्हि ) वन्यां, मृगीमिव, माम , अपि, वनं नय।

**सुधा**—एवं स्वीकृतरामवनगमनस्वभर्तृसेवाऽपि सपत्नीक्लेशस्मरणात् पुना रामानुगमनमर्थयते—**आसामिति**। आसां = त्वद्वियोगहेतुभूतानां, सपत्नीनां मध्ये, वस्तुं = स्थातुं, मे = मम कौशल्यायाः, न क्षमं = नोचितम् , ( अतः ) हे काकुत्स्थ = ककुत्स्थवंशोद्भव! पितुः = तातस्य, अपेक्षया = इच्छया, यदि=चेत्, ते = तव, गमने=प्रस्थाने, बुद्धिः, कृता=निश्चिता, (तर्हि) वन्यां=वने भवां, मृगीं= हरिणीमिव, मां = कौशल्यामपि, नय=प्रापय। तथा च यथा वन्या मृगी वने सन्तुष्टा तिष्ठति तथाऽहमपि स्थास्यामि न भवन्तं क्लेशयिष्यामीति भावः ॥

**इन्दुमती**—( अब कौशल्याको यह भय होनेलगा कि अगर महाराजकी

सेवाके लिये हम अयोध्यामें रहें तो कैकेयीने पुनः कोई कुचक्र रचकर महाराजकी सेवासे वञ्चित करनेके लिये हमें भी न कहीं घरसे निकलवा दे। अतः रामसे इस प्रकार कहने लगीं—) हे ककुत्स्थवंशमें उत्पन्न वत्स राम! (तुम महाराजकी सेवाके हेतु हमें रहनेको कहते हो पर) मैं यहां इन (कैकेयोकी ऐसी) सौतोंके बीच रहनेमें असमर्थ हूँ (नहीं रहूँगी) इसलिये हे पुत्र! यदि तुमने पिताकी आज्ञा पालन करनेके लिये वन जाना निश्चय कर ही लिया है तो मुझे भी अपने साथ वनमें लेते चलो। मैं वहां वनैली हरिणी की तरह खुशसे रहूँगी (तुझे किसी प्रकारका कष्ट नहीं दूँगी)॥

**तां तथा रुदतीं दृष्ट्वा-रुदन् रामो वचोऽब्रवीत्॥ २०॥**

**अन्वयः**—तां, तथा, रुदतीं, दृष्ट्वा, (स्वयम्) अरुदन् (वा-रुदन्) रामः, वचनम्, अब्रवीत्।

**सुधा**—तां=कौशल्यां, तथा=तेन प्रकारेण, रुदतीं=क्रन्दतीं (दृष्ट्वाऽपि स्वयम्) अरुदन्=रोदननिवृत्तिं कुर्वन् सन्, वचः=वचनम्, अब्रवीत्=अवोचत्। रोदने सति कातर्यप्रकाशनेन मातुः भूयोऽप्यनुगमनप्रत्याशाप्रसङ्गादिति भावः। यद्वा-तथा रुदतीं तां (दृष्ट्वा) रामोऽपि रुदन् वचोऽब्रवीदित्यन्वयः॥

**इन्दुमती**—इस प्रकार रोती हुई माता कौशल्या को देखकर तथा उनके वचनों को सुनकर रामचन्द्रजी भी रोने लगे (मातृस्नेहसे नेत्रोंमें जल भर आया) और मातासे कहने लगे—॥

**जीवन्त्या हि स्त्रिया भर्त्ता दैवतं प्रभुरेव च।**
**भवत्या मम चैवाद्य राजा प्रभवति प्रभुः॥ २१॥**

**अन्वयः**—हि, स्त्रियाः, भर्त्ता, एव, दैवतं, प्रभुः, च, अद्य, जीवन्त्याः, भवत्याः, मम, च, राजा, एव, प्रभुः, प्रभवति।

**सुधा**—हि=यतः, स्त्रियाः=नार्याः, भर्त्ता=स्वामी, एव, दैवतं=देवता, प्रभुश्च=सर्वार्थसम्पादनसमर्थश्च, (अतः) अद्य=सम्प्रति, जीवन्त्याः=प्राणधारणं कुर्वन्त्याः, भवत्याः=श्रीमत्याः, मम=रामस्य, च, राजैव=नृपतिरेव, प्रभुः=ईश्वरः, प्रभवति=आदेशे समर्थो भवति। तथा च राजाज्ञाभावात्त्वागमनमनुचितमित्याशयः॥

**इन्दुमती**—(रामचन्द्रजीने कहा हे माता जी! महाराजसे बढ़कर आपका कोई नहीं है) स्त्री जबतक जीती रहे तबतक उसे चाहिये कि वह अपने पतिको

ही देवता और मालिक समझें। महाराज ही अभी आपके और मेरे भी मालिक हैं ( वे आपको सौतका कष्ट नहीं होने देंगे ) ॥

**नह्यनाथा वयं राज्ञा लोकनाथेन धीमता।**
**भरतश्चाऽपि धर्मात्मा सर्वभूतप्रियंवदः॥**
**भवतीमनुवर्त्तेत स हि धर्मरतः सदा॥ २२॥**

**अन्वयः**—धीमता, लोकनाथेन, राज्ञा, वयं, नहि, अनाथाः, भरतः, च, अपि, धर्मात्मा, सर्वभूतप्रियंवदः हि धर्मरतः स, भवती, सदा, अनुवर्त्तेत,

**सुधा**—ननु त्वां विना कथमहं स्थास्यामि सपत्नीकृतश्चातिदुःसह इत्यत आह—**नहीति।** धीमता=बुद्धिमता, लोकनाथेन=सकलजननियन्त्रा, राज्ञा=भूपतिना, वयम्=अस्मदादयः, नहि अनाथाः=सनाथा इत्यर्थः, नञ्द्वयेन प्रकृतमर्थं दृढीकृतम्। ननु चोक्तं सपत्नीमध्यवासो दुष्कर इति तन्निराकर्त्तुमाह—**भरतश्चाऽपीति।** भरतश्च,=कैकेयीसुतश्चापि, धर्मात्मा=धर्मशीलः, सर्वभूतप्रियंवदः=अखिलप्राणिप्रियवक्ता। तथा च नहि "अनाथा" इत्युक्तया राजकर्त्तृकगमननियोगाऽभावाद्दुष्कराऽपि स्थितिरनुवर्त्तनीयैव, यच्च सपत्नीमध्यवासदुःखं तदपि भरतस्य धर्मशीलत्वान्न भविष्यतीति भावः। ननु त्वद्विधः सेवको नाऽस्तीति नाशङ्कनीयमित्याह—**भवतीमिति।** हि=निश्चयेन, धर्मरतः=धर्मतत्परः, सः=भरतः, भवतीं=त्वाम्, सदा=सर्वदा, अनुवर्त्तेत=सेवेत॥

**इन्दुमती**--( सौतके बीचमें नहीं रहूँगी। इसका उत्तर देते हुए रामचन्द्रजीने पुनः कहा हे माता जी! ) लोकनाथ ( चक्रवर्ती ) बुद्धिमान् महाराज ( पिता दशरथ ) के रहते हम लोग अनाथ नहीं हो सकते। हमारे भाई भरत भी धर्मात्मा है और सबसे प्रिय बोलने वाला है। धर्ममें उसका अधिक प्रेम है, सभी प्रकारसे सदा ही वह ( भरत ) आपका मन रखे गा। ( आप जो कहें गी वही वह करेगा माता कैकेयिके कुचक्रमें कभी नहीं पड़सके गा )॥

**यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः।**
**श्रमं नाऽवाप्नुयात् किञ्चिदप्रमत्ता तथा कुरु॥ २३॥**

**अन्वयः**—तु, मयि, निष्क्रान्ते, पार्थिवः, पुत्रशोकेन, यथा, किञ्चित्, श्रमं, न, अवाप्नुयात्, तथा, अप्रमत्ता, (सती) कुरु।

**सुधा**—तु=किन्तु, मयि=रामे, निष्क्रान्ते=निर्गते, वनमाश्रिते इत्यर्थः। पार्थिवः=राजा, पुत्रशोकेन=सुतशोकेन, यथा=येन प्रकारेण, किञ्चित्=अल्पमपि,

श्रमं = खेदं, न अवाप्नुयात् = न प्राप्नुयात्, तथा=तेन प्रकारेण, अप्रमत्ता = अनवधानतारहिता, कुरु = विधेहि ॥

इन्दुमती—( रामचन्द्रजीने कहा हे माताजी ! आपका सम्भाल भरत करेगा परन्तु-) मेरे वन चले जानेपर जिससे महाराजको पुत्र-शोक (मेरे वियोग) से जरा भी कष्ट न हो सो काम सावधानीसे आप करती रहना ॥

**दारुणश्चाऽप्ययं शोको यथैनं न विनाशयेत् ।**
**राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २४ ॥**

**अन्वयः**—दारुणः. च, अयं, शोकः, अपि, यथा, एनं, न विनाशयेत्, ( तथा ) समाहिता, ( सती ) वृद्धस्य, राज्ञः, हितं, सततं, चर ।

**सुधा**--दारुणश्च-अतिकठिनश्च, अयं = मद्वियोगजनितः, शोकः=क्लेशः, अपि, यथा = येन प्रकारेण, एनं = पितरं, न विनाशयेत् = लोकान्तरगमनहेतु-कादर्शनतां न प्रापयेत्, ( तथा=तेन प्रकारेण ) समाहिता = एकाग्रचित्ता, (सती) वृद्धस्य = ज्ञानवयोभ्यामधिकस्य, राज्ञः = भूपतेः, हितं = प्रियं, सततं = निरन्तरं, चर=अनुतिष्ठ ॥

इन्दुमती--( रामचन्द्रजीने कहा है माताजी ! ) महाराजकी अब वृद्धा-वस्था है अतः मेरे वन चले जानेसे उत्पन्न यह दारुण पुत्र-शोक जिससे महाराज का नाश नहीं करसके ऐसा काम बड़ी सावधानीसे हमेशा करती रहना ॥

**व्रतोपवासनिरता या नारी परमोत्तमा ।**
**भर्त्तारं नानुवर्त्तेत सा च पापगतिर्भवेत् ॥ २५ ॥**
**भर्त्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥**

**अन्वयः**--परमोत्तमा, व्रतोपवासनिरता, ( अपि ) या, नारी, भर्त्तारं नानु-वर्त्तेत, सा, पापगतिः, भवेत्, भर्त्तुः, शुश्रूषया, च, नारी, ( अपि ) उत्तमं, स्वर्गं, लभते ।

**सुधा**--पतिशुश्रूषणमेव पत्न्याः परमो धर्म इति सार्धश्लोकेन दर्शयति--व्रतेति । परमोत्तमा = उत्कर्षगुणजात्यादिमत्वेन सर्वोत्कृष्टा, व्रतोपवासनिरताऽपि= व्रतोपवासतत्पराऽपि, या = तादृशगुणविशिष्टा, नारी = स्त्री, भर्त्तारं = स्वामिनं, नानुवर्त्तेत = न सेवत, सा, पापगतिः = पापस्य = दुष्कृतस्य, गतिः=फलमिव फलं यस्याः सा तथोक्ता । भवेत्=स्यात् । भर्त्तुः=स्वामिनः शुश्रूषया=सेवया, च=अपि, नारी = साधारणस्त्री, उत्तमं = श्रेष्ठं, स्वर्गं = देवलोकं, लभते=प्राप्नोति ॥

इन्दुमती--( रामचन्द्रजीने कहा है माताजी ! ) व्रतोपवासमें ही निरत होकर उत्तमसे उत्तम कहलाने वाली स्त्री क्यों न हो जाय, परन्तु यदि वह अपनी पतिकी सेवा नहीं करती है तो पापियोंकी गति (नरक) को प्राप्त करती है। और जो स्त्री ( व्रतोपवासमें निरत नहीं होकर भी ) अपने पतिकी सेवा-सुश्रूषामें ( ही ) लगी रहती है वह पतिसेवासे उत्तम स्वर्ग लोक को प्राप्त करती है ॥

**अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २६ ॥**
**शुश्रूषामेव कुर्वीत भर्त्तुः प्रियहिते रता ।**

**अन्वयः**--देवपूजनात्, निवृत्ता ( तथा ) निर्नमस्कारा, अपि, या, भर्तुः, प्रियहिते, रता, ( सती ) शुश्रूषाम्, एव, कुर्वीत, ( साऽपि स्वर्गं लभते ) ॥

**सुधा**—स्त्रिया देवपूजनादिप्रवृत्तिरपि भर्त्तृशुश्रूषायां सत्यां नावश्यकीति सूचयति—अपीति । देवपूजनात् = शिवादिदेवार्चनात्, निवृत्ता = अज्ञानाद्रहिता, ( तथा ) निर्नमस्काराऽपि = भर्त्तृभिन्नद्विजादिविषयकनमस्काररहिताऽपि, या = नारी, भर्त्तः = स्वामिनः, प्रियहिते = प्रियञ्च तद्धितं प्रियहितं तस्मिन् तथोक्ते । रता = तत्परा, ( सती ) शुश्रूषामेव = तत्प्रीतिजनकंकर्मैव, कुर्वीत = विधीयीत । साऽपि उत्तमं स्वर्गं लभते इति पूर्वेण सम्बन्धः । प्रियहिते इत्यत्र हितशब्दस्य पश्चादुपादानेनाऽऽपाततोऽप्रियमपि हितं कुर्यात्, आपपतः प्रियमप्यहितं त्यजेदिति ध्वनितमिति भट्टाः ॥

इन्दुमती—( रामचन्द्रजीने कहा हे माताजी ! पति-सेवा ही स्त्रीका परम धर्म है इस लिये-) भले ही कोई स्त्री देवी-देवताओंका पूजन नहीं करती हो तथा हाथ जोड़कर किसीको नमन नहीं करती हो परन्तु यदि वह स्त्री पतिकी सेवा ही करती हुई, निरन्तर पतिकी भलाई करनेमें तत्पर रहे तो निश्चय ही उसे स्वर्ग प्राप्त होता है ॥

**एष धर्मः स्त्रिया नित्यो वेदे लोके श्रुतः स्मृतः ॥ २७ ॥**

**अन्वयः**—एषः, स्त्रियाः, धर्मः, वेदे, लोके, ( च ) नित्यः, श्रुतः, ( तथा ) स्मृतः, "जातः" ।

**सुधा**—पतिशुश्रूषणमेव स्त्रियाः कर्त्तव्यमित्यत्र प्रमाणमाह-एष इति । एषः= पतिशुश्रूणरूपः, स्त्रियाः =नार्याः, धर्मः=सुकृतम्, वेदे = मन्त्रब्राह्मणात्मके श्रुतौ, श्रुतः =श्रवणविषयीभूतः, वेदाऽवगत इत्यर्थः । लोके=संसारे, स्मृतः=मन्वादिभिः समये स्मृतिविषयीभूतो जात इत्यर्थः ।

**इन्दुमती**—( रामचन्द्रजीने कहा–हे माताजी ! ) स्त्रीके लिये पतिकी सेवा ही पुरातन लोकाचार सिद्ध तथा वेदावगत स्मृत्यनुकूल धर्म है ( इसलिये इस धर्मका परित्यागकर मेरे साथ आप वन नहीं चलें ) ॥ २७ ॥

**अग्निकार्येषु च सदा सुमनोभिश्च देवताः ।**
**पूज्यास्ते मत्कृते देवि ! ब्राह्मणाश्चैव सुव्रताः ॥ २८ ॥**
**एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ।**

**अन्वयः**—हे देवि ! सदा, च, मत्कृते, अग्निकार्येषु, च सुमनोभिश्च, । देवताः सत्कृताः, ते, ब्राह्मणाश्च, पूज्या, एवं, ममागमनकाङ्क्षिणी, कालं, प्रतीक्षस्व ।

**सुधा**—ननु तर्हि कर्मान्तरं त्याज्यं किं नेति, यद्वा–तूष्णीमेव स्थितौ मद्वियोगजनितं दुःखमेनामासाद्य क्लेशयिष्यतीति धिया दुःखविच्छेदनार्थं समययापनसाधनं दर्शयितुमाह—**अग्निकार्येष्विति** । अत्रैकश्चकार एवकारार्थे द्वितीयश्च समुच्चयार्थः, अप्यर्थकश्चापरः तथाच—हे देवि = देवतावत्पूजनीये मातः ! सदा = सर्वदा, मत्कृते = अस्मदर्थम् , अग्निकार्येषु = भर्तृसंमतेषु शान्तिकपौष्टिकहोमेषु क्रियमाणेषु, च = एव, सुमनोभिः=नानापुष्पादिभिः, (चन्दनताम्बूलादिभिश्च) देवताः = शिवादयः, पूज्याः=अर्चनीयाः, ( तथा ) सत्कृताः= दानमानादिभिरादरं प्राप्ताः, ब्राह्मणाः = विप्राश्च, पूज्याः=वन्दनीया ( एतेन स्वपूजैव परोक्षेण व्यक्तीकृतेति बोध्यम् । ) एवं = भर्तृसंमतोक्तपूजनादिना, मम= रामस्य, यदागमनं=वनात् प्रत्यावर्त्तनं, तदाकाङ्क्षिणी=तदभिलाषावती, कालं = चतुर्दशवर्षपर्यन्तं ममागमनसमयं, प्रतीक्षस्व=आशया वर्त्तस्व ।

**इन्दुमती**—( रामचन्द्रजीने कहा—) हे देवि माताजी ! शान्तिक-पौष्टिक होमादि कर्म करके नाना प्रकारके पुष्प, चन्दनादिसे देवताओंकी पूजा और ब्राह्मणोंका सत्कार मेरे मङ्गलके लिये करती रहना और इस प्रकारके अनुष्ठानसे समय बिताती हुई मेरे प्रत्यागमनकी प्रतीक्षा करना ॥

**नियता नियताहारा भर्त्तृशुश्रूषणे रता ॥ २९ ॥**
**प्राप्स्यसे परमं स्थानं मयि पर्यागते सति ।**
**यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ॥ ३० ॥**

**अन्वयः**—भर्त्तृशुश्रूषणे, रता, नियता नियताहारा, (स्थास्यसि चेत् , तथा) मयि, पर्यागते, सति, धर्मभृतां, श्रेष्ठः, यदि, जीवितं, धारयिष्यति, ( तदा ) परमं, स्थानं, प्राप्स्यसे ।

**सुधा**--भर्त्तुः=नृपस्य, शुश्रूषणे=सेवायां, रता=निरता, नियता=स्नानादि-नियमेन यतचित्ता, नियताहारा=मधुमांसादिवर्जनेन शुद्धाहारा (स्थास्यसि चेत्, तथा,) मयि=रामे, पर्यागते=प्रत्यावृत्ते ( सति ) धर्मभृतां=धर्मिष्ठानां ( मध्ये ) श्रेष्ठः=अग्रगण्यः पूज्य इत्यर्थः । ( पिता ) यदि = चेत् , जीवितं=जीवनं, धारयिष्यति=धारणं करिष्यति यद्वा सर्वेषां जीवनं पालयिष्यति । अनेन पितुर्मरणस्य सन्निहितत्वमवगमयति । ( तदा ) परमम्=उत्तमं, कामं=स्वेप्सितमैहिकविषय-सुखम् , प्राप्स्यसे=लप्स्यसे । भर्तृजीवनपुत्रागमने सतोरेव परमकामप्राप्तिसम्भव इत्याशयः ॥

**इन्दुमती**--( रामचन्द्रजीने कहा हेमाताजी ! ) नित्य स्नानादि नियमसे युक्त होकर मधु मांसादि छोड़कर ( संयम-नियमसे रहकर, ) आप महाराजकी सेवा करना मेरे ( बनसे ) लौट आने तक ( चौदह वर्ष तक ) यदि धर्मात्माओंमें श्रेष्ठ महाराज जीवित रहें तो आपका उत्तम मनोरथ पूर्ण होगा ॥

**एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ।**
**कौशल्या पुत्रशोकार्त्ता रामं वचनमब्रवीत् ॥ ३१ ॥**

**अन्वयः**--रामेण, एवम् , उक्ता, तु, बाष्पपर्याकुलेक्षणा, पुत्रशोकार्ता, कौशल्या, रामं, वचनम् , अब्रवीत् ।

**सुधा**--रामेण=स्वतनयेन, एवं=पूर्वोक्तप्रकारेण, उक्ता=कथिता, तु, बाष्प-पर्याकुलेक्षणा =बाष्पो-नयनजलं, तेन पर्याकुलं-व्याप्तम् , ईक्षणम्-अवलोकनं, यस्याः सा तथोक्ता, पुत्रशोकार्त्ता =पुत्रशोकेन रामवियोगजनितशुचा, आर्त्ता= पीड़िता या सा तथोक्ता । कौशल्या =राममाता, रामं=स्वतनयं, वचनं =वक्ष्य-माणं वाक्यम् , अब्रवीत् = अवोचत् ॥

**इन्दुमती**--जब रामचन्द्रजीने इस प्रकार ( महाराजकी सेवा करनेके हेतु अयोध्या ही में रहनेके लिये ) समझाया तब माता कौशल्याके नेत्रोंमें आँसू भर आया । पुत्र-वियोगसे आर्त होकर कौशल्याजी कहने लगीं— ॥

**गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ! ।**
**विनिवर्त्तयितुं वीर ! नूनं कालो दुरत्ययः ॥ ३२ ॥**

**अन्वयः**--हे पुत्रक ! गमने, सुकृतां, ते, बुद्धिं, निवर्त्तयितुं, न शक्नोमि, ( यतः ) कालः नूनं, दुरत्ययः ।

**सुधा**--हे पुत्रक ! हे वीर ! गमने =वनप्रस्थाने, सुकृतां=अतिनिविष्टां

सुदृढ़ामिति यावत् । ते=तव, बुद्धिं=मतिं, निवर्त्तयितुं=प्रत्यावर्त्तयितुं, न शक्नोमि=न समर्थो भवामि । ( तत्र ) हेतुमाह--नूनमिति । कालः = इष्टवियोगादिजनकदैवः, यद्वा-कालः = विजयसमयः । नूनं = निश्चितं, दुरत्ययः=अतिक्रमितुमशक्यः । विधिवशादेव संयोगवियोगौ, तत्प्रतिकर्त्तुमशक्योऽस्माभिः ॥

इन्दुमती--( कौशल्याने कहा- ) हे वत्स राम ! वन जानेमें सुदृढ़ तुम्हारी बुद्धिको अब हम फेर नहीं सकती । हे वीर ! निश्चय ही कालका कोई अतिक्रमण नहीं कर सकता ( भावी होकर ही रहता है ) ॥

**गच्छ पुत्र ! त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो !**
**पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥ ३३ ॥**

अन्वयः--हे पुत्र ! हे विभो ! एकाग्रः, त्वं, (वनं) गच्छ, सदा, ते, भद्रम्, अस्तु ( अहं ) तु, पुनः, त्वयि, निवृत्ते, गतक्लमा, भविष्यामि ।

सुधा--हे पुत्र=वत्स !, विभो = चिरञ्जीव राम !, एकाग्रः =समाहितचित्तः, त्वं, (वनं) गच्छ=व्रज, सदा=सर्वस्मिन् काले, ते=तव, भद्रं=कल्याणम्, अस्तु = भवतु, ( अहं ) तु, पुनः=भूयः, त्वयि=भवति, निवृत्ते=वनादागते सति, गतक्लमा = त्यक्तक्लेशा, भविष्यामि=भविताऽस्मि ।

इन्दुमती--( अन्तमें पुत्रवत्सला माता कौशल्याने कहा-- ) हे वत्स राम ! अब तुम एकाग्र चित्तसे ( साव धान होकर ) वन जाओ । वनमें सदा ही तुम्हारा कल्याण हो । हे विभो ! ( देवातिथि-पूजन व महाराजकी सेवामें भले ही मैं समय विताऊँगी परन्तु- ) तुम्हारे वनसे लौट आने पर ही मेरा क्लेश दूर होगा ॥

**प्रत्यागते महाभागे कृतार्थे चरितव्रते ।**
**पितुरानृण्यतां प्राप्ते स्वपिष्ये परमं सुखम् ॥ ३४ ॥**

अन्वयः—चरितव्रते, कृतार्थे, महाभागे, प्रत्यागते, ( सति ) ( तथा ) पितुः, आनृण्यतां, प्राप्ते, ( च सति ) परमं सुखम्, ( अहं ) स्वपिष्ये ।

सुधा—चरितव्रते=चरितम्—अनुष्ठितं पित्राज्ञापालनरूपं व्रतं येन, सः, तस्मिन् तथोक्ते । कृतार्थे=कृतः-सम्पादितः, अर्थः-स्वप्रतिज्ञाविषयीभूतं वस्तु येन सः, तस्मिन् तथोक्ते । महाभागे="आरभ्योत्पत्तिमामृत्योः कलङ्को यस्य नो भवेत् । स्याच्चैवानुपमा कीर्त्तिः स महाभाग उच्यते ॥" इत्युक्तगुणविशिष्टे-त्वयि, प्रत्यागते=वनान्निवृत्ते, (सति) तथा, पितुः=राज्ञः, आनृण्यताम्=अनृणताम्, (स्वार्थेष्यञ् ) प्राप्ते=लब्धे, (च, सति,) परमम्=उत्तमं, सुखम्=आनन्दं, यथा स्यात्तथा,

क्रियाविशेषणमिदम् । ( अहं ) स्वपिष्ये = शयिष्ये, । यद्वा—चरितव्रते, कृतार्थे, प्रत्यागते, तथा, पितुरानृण्यतां प्राप्ते इहागते च महाभागे=महाऽऽभां=राज्यलक्ष्मीमागच्छति-प्राप्नुवति तस्मिन् त्वयि, परमं सुखं स्वपिष्य इत्यर्थः ।

**इन्दुमती**—(कौशल्याने कहा-) हे महाभाग वत्स राम ! जब तुह्मारा व्रत ( पिताकी आज्ञापालनरूप; चौदह वर्षका वनवास ) पूरा हो जायगा और इस पितृ-ऋणसे मुक्त होकर वनसे तुम लौट आओगे तब मुझे बहुत ही आनन्द होगा। और तब ही मैं सुखकी निन्द सोऊँगी । ( अभी तो दिन-रात तुह्मारी चिन्ता बनी रहे गी ) ॥

**कृतान्तस्य गतिः पुत्र ! दुर्विभाव्या सदा भुवि ।**
**यस्त्वां सञ्चोदयति मे वच आविद्ध्य राघव ! ॥ ३५ ॥**

**अन्वयः**—हे पुत्र ! भुवि, सदा, कृतान्तस्य, गतिः, दुर्विभाव्या, यत्, हे राघव ! मे, वचः, आविद्ध्य, त्वां, सञ्चोदयति ।

**सुधा**—हे पुत्र = वत्स !, भुवि = पृथिव्यां, सदा = सर्वदा, कृतान्तस्य = दैवस्य, गतिः = चरित्रं, दुर्विभाव्या = तर्कितुमशक्या दुर्लक्ष्येति यावत् । यद् = यस्माद्धेतोः, हे राघव=रघुनन्दन ! मे=मम कौशल्यायाः, वचः=वचनम्, आविध्य = भेदनं कृत्वा, त्वां=सर्वप्रियं सर्वसुन्दरं भवन्तं, सञ्चोदयति=गमनाय प्रेरयति । यद्वा—हे पुत्र ! यद्=यस्माद्धेतोः, कृतान्तस्य = राक्षसस्य, ( जातावेकवचनम्, तेन राक्षसानामित्यर्थः ) गतिः = गमनं, दुर्विभाव्या=ज्ञातुमशक्या, तस्माद्धेतोः, हे राघव ! आविध्य=स्वस्त्यादिविधानं कृत्वा, मे, वचः, त्वां, सञ्चोदयति=तत्र गमनाय प्रेरयति ।

**इन्दुमती**—( माता कौशल्याने पुनः कहा- ) हे वत्स राम ! इस लोकमें विधाताकी गतिको कभी कोई समझ नहीं सकता ( भाग्यका लिखा होकरके ही रहता है ) क्योंकि यह भाग्यका ही करतूत है, जो मेरे वचनको टालकर तुह्मे वनजानेकी प्रेरणा कर रहा है ( मेरे वचनको तुम नहीं मान रहे हो ) ॥

**गच्छेदानीं महाबाहो ! क्षेमेण पुनरागतः ।**
**नन्दयिष्यसि मां पुत्र ! साम्ना श्लक्ष्णेन चारुणा ॥ ३६ ॥**

**अन्वयः**—हे महाबाहो ! इदानीं, क्षेमेण, ( सहितः ) गच्छ, हे पुत्र ! आगतः, (त्व) श्लक्ष्णेन, चारुणा, साम्ना, ( वाक्येन ) मां पुनः, नन्दयिष्यसि ।

**सुधा**—हे महाबाहो = महान्तौ—आजानुलम्बिनौ, बाहू—भुजौ, यस्य

सः, तत्सम्बुद्धौ । इदानीं=सम्प्रति, क्षेमेण=मत्कृतस्वस्त्ययनादिवाचनहेतुककल्याणेन (सहितः वनं) गच्छ=व्रज, हे पुत्र=वत्स ! आगतः=वनान्निवृत्तः, (त्वं) श्लक्ष्णेन= मृदुलेन निर्मलेन, रमणीयार्थेन वा, चारुणा = मनोहरेण रमणीयवर्णविशिष्टेने-त्यर्थः । साम्ना=शान्तिविधायकेन, (वाक्येन,) मां=दीनां मातरं, पुनः = भूयः, नन्दयिष्यसि = आनन्दयिष्यसि ।

**इन्दुमती**—हे आजानुबाहु भद्र राम ! अब तुम वन जाओ और हे पुत्र! ( चौदह वर्षके बाद शीघ्र ) कुशलसे लौटकर शुद्ध चित्तसे मृदु वचन कहकर मुझे ( अपनी दुखिया माताको ) आनन्दित करो ॥

**अपीदानीं स कालः स्यात् वनात्प्रत्यागतं पुनः ।**
**यत्त्वां पुत्रक ! पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥**

अन्वयः—हे पुत्रक ! यत् , वनात् , प्रत्यागतं, जटावल्कलधारिणं, त्वां, पुनः, पश्येयं, स, कालः, इदानीम् , अपि, स्यात् ?, ।

**सुधा**—क्षणमात्रमप्यनवलोकनासहिष्णुत्वात् प्रत्यागमनकालः समीप एव सम्भवेदिति प्रार्थयते—अपीति । हे पुत्रक=हेवीर ! यत्=यस्मिन् समये, अथवा यत्=येन चतुर्दशवर्षान्तेन कालेन, वनात्=अरण्यात् , प्रत्यागतं=निवृत्तं, जटा-वल्कलधारिणं=जटाः-संहतकेशाः, वल्कलानि-वृक्षत्वचः धारयन्तीत्येवं शीलम् । त्वां = भवन्तं, पुनः = भूयः, पश्येयम् = अवलोकयेयं, सः = कालः, इदानीं = समीपे = एव, अपि स्यात् = अपि भवेत् ?, वियोगकालस्याधिक्यं यथा न प्रति-भासेत तथा स्यात् किमित्यर्थः । ( अपिरत्र सम्भावनायाम् ) ।

**इन्दुमती**—( पुत्र वत्सला माता कौशल्याने कहा- ) हे वत्स ! क्या वह समय आवेगा ? जब मैं तुम्हे वनसे लौटे हुए और जटावल्कल धारणकिये हुए देखूं गी ॥

**तथा हि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ।**
**उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाऽभिकाङ्क्षिणी ॥ ३८ ॥**

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये-**
**अयोध्याकाण्डे चतुर्विंशः सर्गः ।**

---

अन्वयः—देवी, वनवासनिश्चितं, तथा, शुभलक्षणं, रामं, परमेण, हि, चेतसा, ददर्श, ( तथा ), स्वस्त्ययनाभिकाङ्क्षिणी, च, बभूव । (तं) रामं, ( शुभ-लक्षणं ), वचः, उवाच, ।

**सुधा**—वनवासनिश्चितं = निश्चितवनवासं, तथा शुभलक्षणं = सकलसामुद्रिकलक्षणलक्षितं, रामं=स्वतनयं, परमेण = उत्कृष्टेन, हि, चेतसा = हृष्टया, ददर्श = अवलोकयामास। तथा, स्वस्त्ययनाभिकाङ्क्षिणी=स्वस्त्ययनं-मंगलं, अभिकाङ्क्षितुम्-अभिलषितुं, शीलमस्त्यस्याः सा, तथोक्ता च, बभूव=जाता, अत एव (तं) रामं शुभलक्षणं=शुभसूचकं, वचः=वक्ष्यमाणवचनम् , उवाच= उक्तवती। शुभलक्षणमित्यस्य "देहलीदीप"न्यायेनोभयत्र सम्बन्धः।

इति श्रीवाल्मीकिरामायणेऽयोध्याकाण्डे 'सुधा' टीकायां चतुर्विंशः सर्गः।

---

**इन्दुमती**—एवं प्रकारेण रामचन्द्रजीसे कह कर माता कौशल्याने वनजानेके लिये निश्चित (दृढ़प्रतिज्ञ) पुत्र रामको आदर दृष्टि से देखा और शुभ सूचक वचन ('अयमारम्भः शुभाय भवतु' इत्यादि) कहा और राम-वनगमन यात्राके मङ्गलाचारमें लग गयी॥

इस प्रकार इन्दुमती टीकामें अयोध्याकाण्डका चौबीसवां सर्ग समाप्त हुआ।

---

## अथ पञ्चविंशः सर्गः

## आशीर्वादः

**सा विनीय तमायासमुपस्पृश्य जलं शुचि।**
**चकार माता रामस्य मङ्गलानि मनस्विनी॥ १॥**

**अन्वयः**—मनस्विनी, माता, तम् , आयासं, विनीय, शुचि, जलम् , उपस्पृश्य, रामस्य, मङ्गलानि, चकार।

**सुधा**—तान्येव स्वस्त्ययनादीनि दर्शयितुमाह—**सेति**। मनस्विनी = दृढ़मनस्का, सा = माता कौशल्या, तं = निश्चितवियोगजनितम् , आयासं = क्लेशं, विनीय = विचारेण दूरीकृत्य, शुचि = पवित्रं, जलं = सलिलम् , उपस्पृश्य = आचम्य, "उपस्पर्शस्त्वाचमन" मित्यमरः। रामस्य = स्वतनयस्य, मङ्गलानि = शुभानि स्वस्त्ययनानीत्यर्थः। चकार = कृतवती।

**इन्दुमती**—(अन्ततो गत्वा "नूनं कालो दुरत्ययः" अर्थात् भावीको कोई रोक नहीं सकता, यह समझकर) विचार शील माता कौशल्याने शोकको त्याग कर (आंसू पोछकर) जलसे आचमन किया और पवित्र होकर रामजीके वनयात्राको सफल बनानेके लिये तदनुकूल मङ्गलाचार करने लगी॥

**न शक्यते वारयितुं गच्छेदानीं रघूत्तम !।**
**शीघ्रं च विनिवर्त्तस्व वर्त्तस्व च सतांक्रमे ॥ २ ॥**

**अन्वयः**—हे रघूत्तम ! इदानीं ( गमनं ) वारयितुं, ( मया ) न, शक्यते, ( अतः ) गच्छ, च, सतां, क्रमे, वर्त्तस्व, च ( ततश्चतुर्द्दशवर्षान्ते वनात् ) शीघ्रं, विनिवर्त्तस्व।

**सुधा**—हे रघूत्तम = रघुवंशिश्रेष्ठ ! इदानीं = सम्प्रति, ( तव गमनं ) वारयितुं = निषेधयितुं, ( मया ) न शक्यते = न पार्यते, ( अतः वनं ) गच्छ = व्रज, च = तथा, सतां = महात्मनां, क्रमे = मार्गे, वर्त्तस्व = स्थिरो भव। ( ततश्चतुर्द्दशवर्षान्ते वनात् ) शीघ्रम् = आशु, विनिवर्त्तस्व = प्रत्यावर्त्तस्व। **यद्वा** ( चतुर्द्दश वर्षान्ते वनात् ) शीघ्रं विनिवर्त्तस्व, विनिवृत्य च सतां मार्गे = अभिषेचने वर्त्तस्वेत्याशीः शंसनम्।

**इन्दुमती**—( कौशल्याने कहा- ) हे रघुकुलदीपक वत्स राम ! मैं अब तुमको वनजानेसे रोक नहीं सकती (क्योंकि मैं समझ गयी कि 'विधिगति टरे न टारा' अतः) अब तुम जाओ और सन्मार्गका अनुसरण करो ( पिताज्ञाका यथाविधि पालन करो ) परन्तु हे पुत्र ! चौदह वर्षके बाद शीघ्र ही लौटकर चला आना॥

**यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च।**
**स वै राघवशार्दूल ! धर्मस्त्वामभिरक्षतु ॥ ३ ॥**

**अन्वयः**—हे राघवशार्दूल ! यं, धर्मं, प्रीत्या, च, नियमेन, च, त्वं, पालयसि, वै, सः, धर्मः, त्वाम्, अभिरक्षतु॥

**सुधा**—हे राघवशार्दूल = रघुकुलश्रेष्ठ ! यं = पित्र्याज्ञापालनरूपं, धर्मं, प्रीत्या = प्रेम्णा, च = पुनः, नियमेन = यमादिसमग्रनियमेन, च, पालयसि = अप्रच्युतमनुतिष्ठसि, वै = निश्चयेन, सः = पित्र्याज्ञापालनरूपो धर्मः, त्वां = भवन्तम्, अभिरक्षतु = सम्पालयतु, विघ्नादिभ्यो निवारयत्विति भावः।

**इन्दुमती**—( माता कौशल्याने आशीर्वाद देती हुई कहा- ) हे रघुकुलकेसरी महाप्रतापी वत्स राम ! जिस धर्मका पालन तुम प्रीतिपूर्वक नियमित रूपसे करने जारहे हो वही ( पिताज्ञापलन रूप ) धर्म ( वनमें ) तुह्मारी रक्षाकरे॥

**येभ्यः प्रणमसे पुत्र ! देवेष्वायतनेषु च।**
**ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥**

**अन्वयः**—हे पुत्र ! देवेषु, च, आयतनेषु, येभ्यः, प्रणमसे, ते, च, वने, महर्षिभिः सह, त्वाम् , अभिरक्षन्तु ।

**सुधा**—हे पुत्र=वत्स ! देवेषु=देवार्चनेषु, आयतनेषु=देवालयेषु, च, येभ्यः=देवेभ्यः, प्रणमसे=नमस्करोषि । **यद्वा**-देवेषु = द्युतिमत्सु, आयतनेषु=गृहेषु येभ्यः प्रणमसे च, ते=देवाः, चादृषयः, वने=विपिने, महर्षिभिः भरद्वाजादिभिः, सह=सहितं, त्वां=भवन्तम् , अभिरक्षन्तु=प्रत्यूहरहितं कुर्वन्तु। **यद्वा**-महर्षिभिः सह देवा अभिरक्षन्त्विति सम्बन्धो विधेयः ।

**इन्दुमती**—हे वत्स राम ! देव-मन्दिरोंमें जिन देवी-देवताओंको, तुम नित्य प्रणाम करते हो वे देवतालोग महर्षियोंके सहित वनमें तुम्हारी रक्षाकरें ॥

**यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।**
**तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥**

**अन्वयः**—धीमता, विश्वामित्रेण, ते, यानि, अस्त्राणि, दत्तानि, तानि, गुणैः समुदितं, त्वाम् , सदा, अभिरक्षन्तु ।

**सुधा**—धीमता = बुद्धिमता, विश्वामित्रेण = गाधिसुतेन, ते = तुभ्यं, यानि= दण्डचक्रादीनि, अस्त्राणि=आयुधानि, "आयुधं तु प्रहरणं शस्त्रमस्त्रम्" इत्यमरः । दत्तानि = अर्पितानि, तानि निखिलान्यस्त्राणि, ( कर्त्तृणि ) गुणैः=दयादाक्षिण्यादिभिः सद्गुणैः, समुदितं = प्रकाशितं, त्वां=भवन्तम् , सदा = सर्वस्मिन् काले, अभिरक्षन्तु = सम्पालयन्तु ।

**इन्दुमती**—( माता कौशल्याने फिर कहा— ) हे वत्स ! बुद्धिमान् महर्षि विश्वामित्रजीने तुझे जितने अस्त्र दिये हैं, वे सब श्रेष्ठ गुण युक्त अस्त्र वनमें तुह्मारी रक्षा करें ॥

**पितृशुश्रूषया पुत्र ! मातृशुश्रूषया तथा ।**
**सत्येन च महावाहो ! चिरं जीवाऽभिरक्षितः ॥ ६ ॥**

**अन्वयः**—हे पुत्र ! हे महाबाहो ! पितृशुश्रूषया, तथा, मातृशुश्रूषया, च, सत्येन, अभिरक्षितः, ( त्वं ) चिरं, जीव ।

**सुधा**—हे पुत्र=हे वत्स ! हे महाबाहो=महान्तौ-दीर्घौ, बाहू-भुजौ यस्य तत्सम्बुद्धौ । 'भुजबाहू प्रवेष्टो दोः" इत्यमरः । पितृशुश्रूषया=जनकसेवया, तथा, मातृशुश्रूषया = अस्मत्सेवया, **यद्वा**-मातुः-कैकेय्याः, शुश्रूषया-मनोरथसम्पादनरूपसेवया । च = अपि च, सत्येन = तद्रूपेण धर्मेण, अभिरक्षितः =

अभितः-सर्वदिक्षु, रक्षितः-त्रातः, ( त्वं ) चिरं=बहुकालं, जीव = प्राणान् धारय, वस्तुतोऽन्तर्भावितण्यर्थोऽयम्, तथा सति चिरं जीव चिरं ( प्रजाः ) पालयेत्यर्थः ।

इन्दुमती—( पुनश्च कौशल्याने कहा— ) हे आजानुबाहु वत्स राम ! पिता-माताकी सेवा और सत्यपालनके फलसे (वनमें रक्षित होकर) तुम अधिक दिनतक जीवो ॥

**समित्कुशपवित्राणि वेद्यश्चायतनानि च ।**
**स्थण्डिलानि च विप्राणां शैला वृक्षाः क्षुपा ह्रदाः ॥**
**पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ! ॥ ७ ॥**

अन्वयः--हे नरोत्तम ! समित्कुशपवित्राणि, वेद्यः, च, आयतनानि, च, विप्राणां, स्थण्डिलानि, च, शैलाः, वृक्षाः, क्षुपाः, ह्रदाः, पतङ्गाः, पन्नगाः, सिंहाः, ( वने चरन्तं ) त्वां, रक्षन्तु ।

सुधा--हे नरोत्तम=नरश्रेष्ठ ! समित्कुशपवित्राणि=समिधः-होमीयपलाशादि-काष्ठानि, कुशाः-बर्हिषः पवित्राणि-दर्भग्रन्थिविशेषाः, तानि च तथोक्तानि, वेद्यः = अग्निधिष्ण्यानि, च = तथा, आयतनानि = देवगृहाणि, विप्राणां=ब्राह्म-णानां, स्थण्डिलानि = देवपूजास्थलानि, शैलाः = क्षुद्रपर्वताः, वृक्षाः=द्रुमाः, ( एतच्चोपलक्षणन्तेन लतादेपि परिग्रहः ) क्षुपाः = ह्रस्वशाखाशिफायुक्ताः वृक्ष-विशेषाः, "ह्रस्वशाखाशिफः क्षुपः" इत्यमरः । यद्वा "ह्रस्वशाखावृक्षेष्वेव प्रायशो देवताः सन्निदधत" इत्यैतिह्याद् वृक्षविशेषणं-क्षुपशब्दो ज्ञेयः । ह्रदाः=तडागादयः, पतङ्गाः = पक्षिणः, पन्नगाः = सर्पाः, सिंहा=मृगेन्द्राः, (वने चरन्तं) त्वां=भवन्तं, रक्षन्तु = त्रायन्ताम् । अत्र समिदादिपदेन तत्तदधिष्ठातृदेवता ग्राह्याः ।

इन्दुमती—( कौशल्याने कहा- ) हे नरोत्तम राम ! वनमें समित् ( हवन की लकड़ी ) कुशा, कुशाकी, बनी पवित्री तथा ( ऋषिमण्डपकी ) वेदियां, देवालय, ब्राह्मणोंके देव-पूजास्थल ( जो कि वट, पीपल, नीम आदि देववृक्षोंके नीचे बना रहता है ), पर्वत, वृक्ष, छोटी २ शाखा वाले पौधें ( तृण विशेष ), जलाशय, पक्षी, सर्प, और सिंह सभी वनमें तुम्हारी रक्षा करें ॥

**स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षिभिः ।**
**स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥ ८ ॥**
**लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ।**

**ऋतवः षट् च ते सर्वे मासाः संवत्सराः क्षपाः ॥ ६ ॥**
**दिनानि च मुहूर्त्ताश्च स्वस्ति कुर्वन्तु ते सदा ।**

**अन्वयः**—सदा, महर्षिभिः ( सह ) साध्याः, च, विश्वे, च, मरुतः, ते स्वस्ति, कुर्वन्तु च धाता, विधाता, ( ते ) स्वस्ति, च, ( कुर्वन्तु ) च, पूषा, भगः, अर्यमा, ( ते ) स्वस्ति (कुर्वन्तु) च, वासवप्रमुखाः, ते, सर्वे, लोकपालाः, तथा, ते, सर्वे, षट्, ऋतवः, च, मासाः, संवत्सराः, क्षपाः, च, दिनानि, मुहूर्त्ताः, सदा, ते, स्वस्ति, कुर्वन्तु ।

**सुधा**—सदा, महर्षयः=भरद्वाजादिभिः, (सह) साध्याः=साध्यं-सिद्धिः, साऽस्ति येषां ते गणदेवविशेषाः, च=पुनः, विश्वे=विश्वेदेवाः(१), मरुताः=मरुद्गणाः, ते=तुभ्यं ( ते इत्यस्याऽग्रेप्यन्वयः ), स्वस्ति=कल्याणं, कुर्वन्तु ( कुर्वन्त्वित्यस्याप्यग्रेऽप्यन्वयः ) । च = पुनः, धाता = दक्षप्रजापतिः, विधाता = ब्रह्मा, च = चकारादन्येऽपि ब्रह्माण्डाऽधिनायकाः, ते = तुभ्यं, स्वस्ति = मङ्गलं, कुर्वन्तु । च= पुनः, पूषा, भगः, अर्यमेत्यादिद्वादशसंख्यकादित्यावान्तरभेदविशेषवाचकाः, ते= तुभ्यं, स्वस्ति=मङ्गलं, कुर्वन्तु । च = पुनः, वासवप्रमुखाः = इन्द्रादिप्रधानाः, ते सर्वे(२) लोकपालाः, तथा = शास्त्रोक्ताः(३) सर्वे = षड्ऋतवः, च=पुनः (शास्त्रोक्ताः सर्वे) मासाः = चैत्रादयो द्वादशमासाः, संवत्सराः = संवसन्ति ऋतवो यत्र ते तथोक्ताः, प्रभवनामादिका इति यावत् । क्षपाः = रात्रयः, च = पुनः, दिनानि = सूर्यादिवाराः, मुहूर्त्ताः = द्वादशक्षणाः, 'ते तु मुहूर्त्तो द्वादशास्त्रियाम्' इत्यमरः । सदा = सर्वस्मिन्काले ते = तुभ्यं स्वस्ति = मङ्गलम्, कुर्वन्तु = सम्पादयन्तु ॥

**इन्दुमती**—( कौशल्याने कहा- ) हे वत्स राम ! वनमें जाने पर ( बारहो साध्यगण, तेरहों विश्वेदेवगण, उनचासो पवन और सभी ऋषिगण तुम्हारा मंगल करें और धाता, विधाता ( दक्ष-प्रजापति ) पूषा, भग और अर्यमा ये

---

( १ ) क्रतु-दक्ष-सत्यवसु-काल-काम-धुरिलोचन-पुरूरवो—माद्रवस—अष्टावेते विश्वेदेवपदवाच्याः ।

( २ ) इन्द्रो-वह्निः-पितृपतिः-नैऋतो-वरुणो-मरुत्-कुवेर-ईशः-अष्टावेते दिग्पालपदवाच्यो लोकपालाः ।

( ३ ) हेमन्त-शिशिर-वसन्त-ग्रीष्म-वर्षा-शरद्-एते षड्ऋतवः ।

( इन्द्रादि ) लोकपाल तुम्हारा मंगल करें। एवं छहो ऋतुयें, दोनो पक्ष, बारहो मास, साठहो भिन्न २ नामके संवत्सर, रात, दिन तथा बारहो मुहूर्त्त तुम्हारा मंगल करें ।

**श्रुतिः स्मृतिश्च धर्मश्च पातु त्वां पुत्र ! सर्वतः ॥ १० ॥**
**स्कन्दश्च भगवान् देवः सोमश्च सबृहस्पतिः ।**
**सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥**

**अन्वयः**—हे पुत्र ! श्रुतिः, च, स्मृतिः, च, धर्मः, त्वां, सर्वतः, पातु । च, स्कन्दः, भगवान् देवः, च, सबृहस्पतिः, सोमः, (तथा) सप्तर्षयः, नारदः, च, ते, ( मयास्तुताः ) सर्वतः, त्वां, रक्षन्तु ।

**सुधा**—हे पुत्र = वत्स ! श्रुतिः = आम्नायः, च=पुनः, स्मृतिः=मन्वादिधर्मशास्त्रं, च = पुनः, धर्मः=श्रुतिस्मृत्युदितः, त्वां=भवन्तं, सर्वतः=अभितः, पातु= रक्षतु । च = पुनः, स्कन्दः = कार्तिकेयः, भगवान्=भगः-माहात्म्यमस्याऽस्तीति भगवान् , देवः = महादेवः ( नामैकदेशेन नामग्रहणात् ), च = पुनः, सबृहस्पतिः = गुरुसहितः, सोमः=चन्द्रः यद्वा उमासहितो महादेवः, एतत्पक्षे पूर्वे "देव" इत्यस्येन्द्रोऽर्थः । (तथा) सप्तर्षयः=मरीच्यत्रिमुखाः(१) नारदः=नारं-ज्ञानं, ददातीति नारदो योगी । ते=सर्वे (मया स्तुताः) सर्वतः=अभितः, त्वां = भवन्तं, रक्षन्तु = पान्तु, तत्रत्यविघ्नादिभ्यो निवारयन्त्वित्यर्थः ।

**इन्दुमती**—( कौशल्याने पुनः कहा- ) हे पुत्र राम ! वेद, पुराण और तत्प्रतिपादित धर्म, वनमें तुम्हारी रक्षा करें। तथा पार्वतीनन्दन और पार्वती सहित भगवान् शंकर, बृहस्पति, सप्तर्षि और योगि-राज नारद जी सदैव (वनमें) तुम्हारी रक्षा करें ।

**ते चाऽपि सर्वतः सिद्धाः दिशश्च सदिगीश्वराः ।**
**स्तुता मया वने तस्मिन् पान्तु त्वां पुत्र ! नित्यशः ॥ १२ ॥**

**अन्वयः**—हे पुत्र ! मया, स्तुताः, ते, च, सदिगीश्वराः, सर्वतः, सिद्धाः, च, दिशः अपि, तस्मिन् , वने, नित्यशः, त्वां, पान्तु ।

**सुधा**—हे पुत्र = राम !, मया = तव मात्रा कौशल्यया, स्तुताः=वन्दिताः, ते=सप्तर्ष्यादयः, च = तथा, सदिगीश्वराः = दिक्पालसहिताः, सिद्धाः=प्रसिद्धाः, **यद्वा**—तपोविशेषैः कृतसाक्षात्काराः सिद्धाः, च=पुनः, दिशः=आशाः "दिशस्तु

---

( १ ) सप्तर्षीणां यथाक्रमं नामानि—
मरीचिः-अङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः वसिष्ठश्चेति ।

ककुभः काष्ठा आशाश्च हरिताश्च ताः" इत्यमरः । तस्मिन् वने = त्वदाश्रितवने दण्डकारण्य इत्यर्थः । नित्यशः=प्रतिदिनं, त्वां = रामं, पान्तु = रक्षन्तु ।

**इन्दुमती**—( कौशल्याने कहा- ) हे वत्स राम ! और भी जो सिद्धगण तथा सब दिशाओंके स्वामी हैं, हे पुत्र । मैं उन सबकी स्तुति करती हूँ कि, वे सब वनमें नित्य तुम्हारी रक्षा करें ॥

**शैलाः सर्वे समुद्राश्च राजा वरुण एव च ।**
**द्यौरन्तरिक्षं पृथिवी वायुश्च सचराचरः ॥ १३ ॥**
**नक्षत्राणि च सर्वाणि ग्रहाश्च सहदैवतैः ।**
**अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥ १४ ॥**

**अन्वयः**—वनम् , आश्रितम् , त्वां, सर्वे, शैला, च, ( सर्वे ) समुद्राः च, राजा, वरुणः, एव, द्यौः, अन्तरिक्षं, पृथिवी, सचराचरः, वायुः, च, सर्वाणि, नक्षत्राणि, च, सहदैवतैः, ग्रहाः तथा अहोरात्रे, सन्ध्ये, च, पान्तु ।

**सुधा**—वनं = महारण्यम् , आश्रितं=सेवितं, त्वां, सर्वे=महान्तः लघूनि च, शैलाः=पर्वताः, च=पुनः (सर्वे) समुद्राः = क्षीरसागरादयः, च = पुनः, राजा=यक्षः "यक्षे चन्द्रे च राजा स्यात्" इति त्रिकाण्डशेषः । वरुणः = प्रचेता, एव = अपि, द्यौः = स्वर्गम् , अन्तरिक्षम् = आकाशः, पृथिवी = भूमिः, सचराचरः = स्थावरजङ्गमः, वायुः=पवनः, च=पुनः, सर्वाणि=निखिलानि, नक्षत्राणि=अश्विन्यादि रेवत्यन्तानि, सहदैवतैः = कुजादयः सहदेवताः तदभिमानदेवतासहितैः, ग्रहाः = सूर्यादयः, तथा, अहोरात्रे=दिवानिशे, सन्ध्ये=प्रातः सायंसन्ध्ये, च, पान्तु=रक्षन्तु ।

**इन्दुमती**—( रामवनगमनके कारण विक्षिप्त माता कौशल्याने नौ-दश श्लोककी कही बातोंको भी दुहराती हुई पुनः कहने लगी— ) हे वत्स राम ! सभी छोटे बड़े पर्वत और चारो समुद्र ( जल-निधि ) तथा जलके राजा वरुण तुम्हारी रक्षा करें । एवम्, स्वर्ग, अन्तरिक्ष ( आकाश ), पृथिवी, वायु, चर-अचर (जितने हैं सब) तथा सभी नक्षत्र और देवताओं सहितः सभी ग्रह, दिन-रात और सुबह-शाम वनमें तुम्हारी रक्षाकरें ॥

**ऋतवश्चाऽपि षट्चाऽन्ये मासाः संवत्सरास्तथा ।**
**कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १५ ॥**
**महावनेऽपि चरतो मुनिवेषस्य धीमतः ।**
**तथा देवाश्च दैत्याश्च भवन्तु सुखदाः सदा ॥ १६ ॥**

**अन्वयः**—अपि च, षट्, ऋतवः, च, अन्ये, मासाः, तथा, संवत्सराः, तथा, कलाः, च, काष्ठाश्च, ते, महावने, चरतः, अपि धीमतः, मुनिवेषस्य, तव, शर्म, दिशन्तु। तथा, देवाः, च दैत्याश्च, सदा, सुखदा, भवन्तु।

**सुधा**—ऋतव इति। यद्यपि "ऋतवश्चाऽपि ते सर्वे" इत्यादिना पूर्वमेवै· तेऽर्था निरूपिताः, इति पुनरुक्तिरत्र दृश्यते, तथाऽपि पुत्ररक्षणविषयप्रेमपारवश्य-कृता तथोक्तिरिति न दोषः। अथवाऽर्थान्तरं विधेयम् तथाहि—अपि च = अपरञ्च षट् = षट् संख्याकाः, ऋतवः = ऋतुत्ववयीभूताधिकमासे दिनाभिमानिदेवताः। च = पुनः, अन्ये = अपरे, मासाः = अधिकचैत्रादिमासदेवताः, तथा, संवत्सराः = त्रयोदशमासात्मकवर्षाभिमानिदेवताः, (सौरत्वादिभेदेन पूर्वतो भिन्ना अपि) तथा, कलाः = त्रिंशत्काष्ठाः, च = पुनः, काष्ठाश्च = अष्टादशनिमेषाश्च, "अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ता कलाः" इत्यमरः। ते = सर्वे, महावने = दण्डकारण्ये, चरतोऽपि = भ्रमतोऽपि, धीमतः = बुद्धिमतः, मुनिवेषस्य = वल्कलधारिणः, तव = रामस्य, शर्म = सुखं, दिशन्तु = ददतु, "शर्मशातसुखानि च" इत्यमरः। तथा, देवाः = इन्द्रादयः, च = पुनः, दैत्याश्च = असुराश्च, सदा = सर्वदा, (तव) सुखदाः = कल्याण-दायकाः, भवन्तु = सन्तु।

**इन्दुमती**—(पुनरपि पुत्रवत्सला माता कौशल्या अस्थिर चित्त होकर पुन· रुक्तिसे कहने लगी-) हे वत्स राम! छहो ऋतुयें, अधिमासके सहित सभी मास, सभी नामके संवत्सर तथा कला-काष्ठा याने समयका प्रतिक्षण वनमें तुम्हे सुख दें। तथा हे पुत्र राम! बुद्धिमान् (अत एव) मुनिवेष (वल्कल) धारणकर (पिताकी आज्ञासे) घोर जङ्गलमें विचरते हुए तुम्हारे लिये आदित्यादि देवता और दैत्य सदा सुखदाई हों॥

**राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम्।**
**क्रव्यादानां च सर्वेषां मा भूत्पुत्रक! ते भयम्॥ १७॥**

**अन्वयः**—हे पुत्रक! क्रूरकर्मणां, रौद्राणां, राक्षसानां, पिशाचानां, सर्वेषां, क्रव्यादानां, च, ते, भयं, मा भूत्।

**सुधा**—हे पुत्रक = हे वीर। क्रूरकर्मणां = क्रूरं-नृशंसं, कर्म-व्यवहारो येषां तथोक्तानाम्। रौद्राणां = भयङ्कराणां. राक्षसानां = यातुधानानाम्, "राक्षसो यातुधाने स्याच्चण्डायां राक्षसी स्मृता" इति कोशः। पिशाचानां = देवयोनि-विशेषाणाम्, "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः। सर्वेषां =

निखिलानां, क्रव्यादानां=क्रव्यम्-आममांसम्, अदन्ति-भक्षयन्ति ये ते तथोक्ता-स्तेषां तथोक्तानाम्। यद्वा-कृत्तं छिन्नं तदेव पुनर्विशेषतः कृतं पक्वं च भुङ्क्ते इति क्रव्यादयः, तेषाम्। "सदान्नादर्कणादौ च स्यात्क्रव्यादाममांसभुक्। क्रव्यादः कृत्त-विकृतपक्वमांसभुगुच्यते" इति शब्दार्णवः। ते=तव, भयं = भीतिः राक्षसादि-सम्बन्धिभयमिति यावत्। मा भूत् = मा सन्तु।

**इन्दुमती**—(कौशल्याने कहा-हे पुत्र! मैं आशीर्वाद देती हूं कि-) जघन्य कर्म करनेवाले महाभयङ्कर राक्षसोंका, पिशाचोंका (श्मशानस्थ देवयोनि विशेषोंका) तथा कच्चा मांसको भक्षण करने वाले क्रव्याद आदि जीवोंका भय वनमें तुम्हे नहीं हो॥

**प्लवगा वृश्चिका दंशा मशकाश्चैव कानने।**
**सरीसृपाश्च कीटाश्च मा भूवन् गहने तव॥ १८॥**

**अन्वयः**—गहने, कानने, प्लवगाः, वृश्चिकाः, दंशाः, च, मशकाः, एव (अपि) च, सरीसृपाः, कीटाः, तव, मा भूवन्।

**सुधा**—गहने-गह्वरे, "गह्वरे कलिले चाऽपि" इति हैमः। कानने = विपिने, "काननं तु ब्रह्मास्ये विपिने गृहे" इति हैमः। प्लवगाः = प्लवेन-उत्प्लुत्या, गच्छन्ति ये ते तथोक्ता मण्डूकजातिविशेषाः। यद्वा-प्लवगाः=वानराः, "प्लव-गः कपिभेदयोः" इति हैमः, च=पुनः, वृश्चिकाः=शूकयुक्ताः कीटाः, "वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः" इति मेदिनी। दंशाः = वनमक्षिकाः, "दंशस्तु वनमक्षिकाः" इत्यमरः,। च = पुनः, मशकाः = मच्छर इति लोके प्रसिद्धाः, एव = अपि ('एवकारोऽप्यर्थकः)। च = पुनः, सरीसृपाः = पल्ल्यः, यद्वा गिरिसर्पाः, कीटाः = कृमिदंशकाद्याः, तव=भवतः (रामचन्द्रस्य हिंसकाः) मा भूवन् = मा सन्तु।

**इन्दुमती**—(कौशल्याने कहा-हे वत्स! मैं तुम्हे पुनः आशीर्वाद देती हूं कि-) वनमें कूद-कूद कर चलने वाले प्लवग (मेढ़क आदि जन्तुविशेष) तथा वृश्चिक (विषैले कीड़े—बीछी, विच्छू, भ्रमर आदि), डांस, मच्छर, सरीसृप (गिर-गिट या पहाड़ीसर्प) तथा अन्यप्रकारके भी कीड़े-मकोड़े तुम्हे वनमें दुःखदायी न हों॥

**महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः।**
**महिषा शृङ्गिणो रौद्रा' न ते द्रुह्यन्तु पुत्रक!॥ १९॥**

**अन्वयः**—हे पुत्रक ! महाद्विपाः, च, सिंहाः, व्याघ्राः च, दंष्ट्रिणः, (तथा) ऋक्षाश्च, रौद्राः, शृङ्गिणः, महिषाः, ते, न, द्रुह्यन्तु ।

**सुधा**—हे पुत्रक = हे वीर ! महाद्विपाः = द्वाभ्यां शुण्डाभ्यां पिबन्ति 'ये ते द्विपाः, महान्तश्च ते द्विपा इति तथोक्ताः, ( अतिदीर्घहस्तिनः ), च=पुनः, सिंहाः = मृगेन्द्राः, च = पुनः, व्याघ्राः = शार्दूलाः । "व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः" इति मेदिनी । दंष्ट्रिणः = शूकराः, "वराह शूकरो घृष्टिः कोलः पोत्री किरः किटिः । दंष्ट्री घोणी" इत्यमरः । च=पुनः, ऋक्षाः=भल्लूकाः, "ऋक्षः पर्वतभेदे स्यात् भल्लूके शोणके पुमान्" इति मेदिनी । रौद्राः=भयङ्कराः, शृङ्गिणः= शृङ्गयुक्ताः, महिषाः = सैरिभाः, "लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः । ते = तुभ्यं, न = नहि, द्रुह्यन्तु = अपकुर्वन्तु ।

**इन्दुमती**—(कौशल्याने कहा—हे पुत्र राम ! मैं आशीर्वाद देती हूँ कि-) वनके महामत्त गजेन्द्र, सिंह, व्याघ्र, भालू आदि भयङ्कर घातक दाँतोंवाले जानवर तथा भयङ्कर सींग वाले वनैली भैसें तुम्हारे द्रोही न हों ॥

**नृमांसभोजना रौद्रा ये चाऽन्ये सर्वजातियाः ।**
**मां च त्वां हिंसिषुः पुत्र ! मया सम्पूजितास्त्विह ॥ २० ॥**

**अन्वयः**—ये, च, अन्ये, रौद्राः, नृमांसभोजनाः, सर्वजातियाः, (ते) हे पुत्र ! इह, मया, सम्पूजिताः, तु, त्वां, मा, च हिंसिषुः ।

**सुधा**—ये च, अन्ये = उक्तातिरिक्ताः, रौद्राः=भयङ्कराः, नृमांसभोजनाः = मनुष्यमांसभक्षकाः, सर्वजातियाः = सर्वजातीयाः, ( ते ) हे पुत्र = वत्स ! इह = अयोध्यायां, मया=कौशल्यया, सम्पूजिताः = समर्चिताः, तु, त्वां = भवन्तं, मा हिंसिषुः = हिंसका माभूवन्नित्यर्थः ।

**इन्दुमती**—( कौशल्याने पुनः कहा- ) हे वत्स ! इनके ( उपर्युक्त हिंसक जन्तुओंके ) अतिरिक्त भी मनुष्य-मांसका भक्षण करने वाले जितने भयङ्कर दुष्ट जन्तु हैं, उन सबोंकी भी यहां (अयोध्यामें) मैं आराधना करती हूँ कि वनमें वे तुम्हारी हानि नहीं करें ॥

**आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः ।**
**सर्वसम्पत्तयो राम ! स्वस्तिमान् गच्छ पुत्रक ! ॥ २१ ॥**

**अन्वयः**—ते, आगमाः, शिवाः, सन्तु, पराक्रमाः, सिद्ध्यन्तु, च, सर्वसम्पत्तयः ( सन्तु ) हे पुत्रक ! राम ! ( त्वं ) स्वस्तिमान् , गच्छ ।

**सुधा**—ते = तव, आगमाः = आगम्यन्ते इति आगमाः—मार्गाः, आगमनानुकूलव्यापारा इत्यर्थः। शिवाः = मङ्गलविशिष्टाः, सन्तु=भवन्तु, पराक्रमाः= स्वौजसः, सिद्ध्यन्तु = सफला भवन्तु, च = तथा, सर्वसम्पत्तयः = वनवासापेक्षिताः फलमूलादिरूपाः, (सन्तु) हे पुत्रक = हेवीर, राम ! त्वं, स्वस्तिमान्=मङ्गलयुक्तः, ( सन् , वनं ) गच्छ = व्रज ।

**इन्दुमती**—( पुत्रवत्सला माता कौशल्या आशीर्वादसे हिंस्र जन्तुओंका भय निवृत्ति करके अब माङ्गलिक वचन कहने लगीं- ) हे वत्स राम ! तुम्हारे मार्ग ( वनगमन ) कल्याण कारक हो और तुम्हारा पराक्रम सिद्ध हो तथा वनके फल, मूलादि प्राप्त होते रहें । हे पुत्र राम ! ( यही मेरा आशीर्वाद है ) अब तुम स्वस्तिमान होकर ( निर्विघ्न पूर्वक ) वन जाओ ॥

**स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।**
**सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥**

**अन्वयः**—हे राम ! आन्तरिक्षेभ्यः, ते, स्वस्ति, अस्तु, पार्थिवेभ्यः, पुनः, पुनः, ( ते, स्वस्ति, अस्तु ) देवेभ्यः, (ते, स्वस्ति, अस्तु) च, ये, च, ते, परिपन्थिनः, ( तेभ्यः ) सर्वेभ्यः, एव, ( ते, स्वस्ति, अस्तु )

**सुधा**—हे राम ! आन्तरिक्षेभ्यः = गगनचारिभ्यः, ते = तुभ्यं, स्वस्ति = मङ्गलम् , अस्तु = भवतु, पार्थवेभ्यः = पृथिवीवर्त्तिभ्यः, पुनः पुनः = भूयो भूयः ( ते, स्वस्ति, अस्तु ) देवेभ्यः=सुरेभ्यः ( ते, स्वस्ति, अस्तु ) च = पुनः, ये = पूर्वानुक्ताः, च = अपि, ते = तव, परिपन्थिनः = विरोधिनः ( तेभ्यः ) सर्वेभ्यः, एव = अपि, स्वस्ति = मङ्गलम् , अस्तु = भवतु ।

**इन्दुमती**—( कौशल्याने पुनः कहा- ) हे पुत्र ! आकाश और पृथिवीवर्ती पदार्थोंसे पुनः पुनः (फिर कहती हूँ या बार २ आराधना करूंगी कि ) तुम्हारा कल्याण हो, तथा सभी देवताओंसे एवं जो तुम्हारे विरोधी हों उनसे भी ( पुनः २ कहूंगी कि ) तुम्हारा कल्याण हो ॥

**शुक्रः सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ।**
**पान्तु त्वामर्चिता राम ! दण्डकारण्य(१)वासिनम् ॥ २३ ॥**

---

( १ ) दण्डको नाम कश्चन सूर्यवंशीयो राजा दैत्यगुरोः शुक्राचार्यस्य 'अरजाम्' नामकन्यां बलेन धर्षितवान्। तच्छ्रुत्वा शुक्राचार्यस्तु नितरां कुपितः तं

अन्वयः—हे राम ! दण्डकारण्यवासिनम् , त्वाम् , शुक्रः, च, सोमः, च, सूर्यः, अथ, धनदः, तथा, यमः (च) ( सर्वे मिलित्वा ) पान्तु ।

सुधा—हे राम=हे वत्स ! दण्डकारण्यवासिनं=दण्डकवननिवासिनं, त्वां=भवन्तं, शुक्रः=भार्गवः, च=पुनः, सोमः=चन्द्रः, च=पुनः, सूर्यः= आदित्यः, अथ=अपि च, धनदः=कुवेरः, तथा, यमः=कृतान्तः ( सर्वे मिलित्वा ) पान्तु=रक्षन्तु । पूर्वत्रैकैकशः, अत्र तु मिलित्वेति न पुनरुक्तिः ।

इन्दुमती—( माता कौशल्याने पुनः कहा- ) हे दण्डक वनमें वास करने वाले पुत्र राम ! ( तुम वन जाओ ) भगवान् भार्गव शुक्र, चन्द्र, सूर्य, कुवेर, यम ये सब तुमसे पूजित (खुश) होकर वहां (दण्डक वनमें) तुम्हारी रक्षा करें ॥

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखच्युताः ।
उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ! ॥ २४ ॥

अन्वयः—हे रघुनन्दन ! उपस्पर्शनकाले, तु, अग्निः, वायुः, तथा धूमः, ऋषिमुखच्युताः, मन्त्राश्च, त्वां, पान्तु ।

सुधा—हे रघुनन्दन=नन्दयति—आनन्दयतीति । नन्दनः, रघोः-रघुकुलस्य नन्दनः-रघुनन्दनस्तत्सम्बुद्धौ । उपस्पर्शनकाले=अस्पृश्यस्पर्शनसमये, तु, अग्निः=गार्हपत्याद्यग्निः, वायुः=आश्रमस्थपवनः, तथा, धूमः=वह्नेरुपस्थितशिखा, ऋषिमुखच्युताः=ऋषयः-भरद्वाजादयस्तेषां, मुखाद् वदनात्, च्युताः-निःसृताः, त्वया गृहीताश्च । पान्तु=रक्षन्तु । वनभ्रमणसमये अस्पृश्यस्पर्शनाशुचय आश्रमस्थाग्न्यादिना पूताः सन्तस्त्वां रक्षन्त्वित्याशयः ।

इन्दुमती—( अस्पृश्यका स्पर्श होनेसे आयुका नाश होता है, अतः माता कौशल्याने कहा- ) हे रघुकुलका आनन्द वर्धक राम ! वनमें अछूतोंसे अथवा अस्पृश्य पदार्थोंसे स्पर्श होने पर ( दण्यकारण्यवासी ऋषि-आश्रमके ) अग्नि, वायु, धूम और ऋषियोंके मुख निस्सृत मंत्र ( वेदध्वनि ) तुम्हारी रक्षा करें ( पवित्र करें ) ॥

सर्वलोकप्रभुर्ब्रह्मा भूतकर्त्ता तथर्षयः ।
ये च शेषाः सुरास्ते तु रक्षन्तु वनवासिनम् ॥ २५ ॥

---

राजानं शशाप-त्वं मरिष्यसि' अद्यप्रभृति राज्यञ्चेदं सप्ताहमध्ये महारण्यतया परिणतं भविष्यतीति, तच्च विन्ध्याचलशिखरदेशस्थं राज्यं दण्डकारण्यं नामाऽभूदित्यत्र रामायणीयकथाऽनुसन्धेया ।

**अन्वयः**--वनवासिनं, ( त्वां ) भूतकर्त्ता, सर्वलोकप्रभुः, ब्रह्मा, तथा, ऋषयः च, ये, शेषाः, सुराः, ते, तु, रक्षन्तु।

**सुधा**--वनवासिनं=दण्डकारण्यस्थायिनं, ( त्वां ) भूतकर्ता=प्राणिनिर्माता, सर्वलोकप्रभुः=सर्वे च ते लोकाः-चतुर्द्दशभुवनानि, तेषां प्रभुः-स्वामी । ब्रह्मा= पितामहः, तथा, ऋषयः=भरद्वाजादयः, च=पुनः, ये शेषाः=उक्ताऽवशिष्टाः, सुराः=देवाः, तु=तेऽपि, रक्षन्तु=पान्तु ।

**इन्दुमती**—( कौशल्याने कहा-- ) हे रघुनन्दन ! चौदहो लोकोंके स्वामी ब्रह्मा तथा प्राणियोंका पालन करनेवाले भगवान् विष्णु एवं ऋषिगण तथा अन्य ( पूर्वोक्तावशिष्ट; जिनका नाम पहले नहीं लिया गया हो वे ) देवता भी दण्डकारण्यमें तुम्हारी रक्षा करें ॥

**इति माल्यैः सुरगणान् गन्धैश्चाऽपि यशस्विनी ।**
**स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥ २६ ॥**

**अन्वयः**—इति, आयतलोचना, यशस्विनी, माल्यैः, च, गन्धैः, अनुरूपाभिः, स्तुतिभिश्चाऽपि, आनर्च ।

**सुधा**—इति=एवं प्रकारेण, मत्वेति शेषः । आयतलोचना=आयते लोचने यस्याः सा तथोक्ता दीर्घाक्षीत्यर्थः । यशस्विनी=कीर्त्तिमती, माल्यैः=स्रग्भिः, च=पुनः, गन्धैः=चन्दनादिभिः, अनुरूपाभिः=स्वयोग्याभिः, स्तुतिभिश्चापि= प्रार्थनाभिश्चाऽपि, आनर्च=पूजयामास ।

**इन्दुमती**--(रामवनगमनके समय) इस प्रकारकी मनःकामना करके सुकीर्त्तिमती विशालाक्षी सुन्दरी रामकी माता महारानी कौशल्याने पुष्प-माला-चन्दन आदिसे देवताओंकी पूजा व यथायोग्य स्तुति की ॥

**ज्वलनं समुपादाय ब्राह्मणेन महात्मना ।**
**हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥**

**अन्वयः**—(कौशल्या) राममङ्गलकारणात्, महात्मना, ब्राह्मणेन, ज्वलनं, समुपादाय, विधिना, हावयामास ।

**सुधा**--( कौशल्या ) राममङ्गलकारणात्=रामाभ्युदयहेतोः, महात्मना= शुद्धान्तःकरणेन, ब्राह्मणेन=विप्रेण,ज्वलनं=वह्निं, समुपादाय=ग्राहयित्वा, विधिना=शास्त्रोक्तविधिक्रमेण, हावयामास=होमं कारयामास ।

**इन्दुमती**—( देव-पूजनके पश्चात् पूजान्तमें माता कौशल्याने-- ) पवित्र

अन्तःकरण वाले ब्राह्मण द्वारा अग्निस्थापन करवाकर प्रज्वलित अग्निमें रामचन्द्रजीके वन-मङ्गलके लिये वक्ष्यमाणोक्त विधिसे हवन करवाया ॥

**घृतं श्वेतानि माल्यानि समिधश्चैव सर्षपान्।**
**उपसम्पादयामास कौशल्या परमाङ्गना ॥ २८ ॥**

**अन्वयः**--परमाङ्गना, कौशल्या, घृतं, श्वेतानि, माल्यानि, सर्षपान्, समिधः, च, अपि, उपसंपादयामास।

**सुधा**--परमाङ्गना=परमोत्तमा स्त्री, कौशल्या=राममाता, घृतम्=आज्यम्, श्वेतानि=शुभ्राणि, माल्यानि=स्रजः, सर्षपान्=तन्तुभान्, "सर्षपः स्यात् सरिषपः कुटस्नेहश्च तन्तुभः" इति त्रिकाण्डशेषः। समिधः=यागादिहवनीयकाष्ठानि, चाऽपि, उपसंपादयामास=होमाय ब्राह्मणसमीपं प्रापयामास।

**इन्दुमती**--(देव-स्तुति पूजनके पश्चात्) राम-वन मंगल कांक्षिणी स्त्रीश्रेष्ठ माता कौशल्याने घृत, श्वेत पुष्प; माला, समित् (हवनकी विहित लकड़ी), सरसों आदि सभी हवनकी सामग्रियाँ एकत्र जुटाकर, वेदीपर अग्निस्थापन प्रदेशके समीपमें रख दिया ॥

**उपाध्यायः सविधिना हुत्वा शान्तिमनामयम्।**
**हुतहव्याऽवशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥**

**अन्वयः**--उपाध्यायः, शान्तिम्, अनामयम्, (उद्दिश्य) सविधिना, हुत्वा, हुतहव्याऽवशेषेण, बाह्यं, बलिम्, अकल्पयत्।

**सुधा**--उपाध्यायः (१), शान्तिम्=अभिभवकारकविघ्नराहित्यम्, अनामयम्=आरोग्यम्, उद्दिश्येति शेषः। सविधिना=विधिपूर्वकेण, हुत्वा=हवनं विधाय, हुतहव्याऽवशेषेण=हुतम्-आहुतं, यद्हव्यं-हवनीयं हविः, तस्य, अवशेषः-अवशिष्टो भागः, तेन, तथोक्तेन। बाह्यं=होमस्थानाद्बहिर्भागयोग्यं, बलिं=लोकपालादिबलिम्, विहितलोकपालादिपूजामित्यर्थः। अकल्पयत्=कृतवान्।

**इन्दुमती**--(माता कौशल्या द्वारा हवन सामग्री उपस्थित होनेके पश्चात्-) हवन करने वाले उपाध्याय (पुरोहित) ने विधिपूर्वक अनामय-शान्ति (कष्टं घोरभयं वारय वारय पूर्णायुर्वितर वितर सर्वान् कामान् पूरय २ इत्यादि रूपेण,

---

(१) एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
अध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥

राम-वनगमन कल्याणार्थ ) हवन करके अग्निस्थापन प्रदेशसे बाहर हवनावशिष्ट साकल्यसे लोकपालोंको बलि दी ॥

**मधुदध्यक्षतघृतैः स्वस्तिवाच्यं द्विजांस्ततः ।**
**वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥ ३० ॥**

**अन्वयः**—स्वस्तिवाच्यम् ( उद्दिश्य ) मधुदध्यक्षतघृतैः, द्विजान् ( कृत्वा ) ततः, रामस्य, वने, स्वस्त्ययनक्रियां, ( द्विजैः ) वाचयामास ।

**सुधा**—स्वस्तिवाच्यं=पुण्याहवाचनम् ( उद्दिश्य ) मधुदध्यक्षतघृतैः=मधु च, दधि च, अक्षतं च, घृतञ्चेति मधुदध्यक्षतघृतानि तैस्तथोक्तैः, एतैरुपलक्षितान् द्विजान्= स्वस्तिवाचनार्हब्राह्मणान् ( कृत्वा ), ततः =तदनन्तरं, रामस्य=स्वतनयस्य, वने =दण्डकारण्ये, स्वस्त्ययनक्रियां=स्वस्ति-मङ्गलमस्त्वित्येवंरूपां वनविषयकस्वस्त्ययनक्रियाप्रतिपादकवाक्यमित्यर्थः । वाचयामास=पाठयामास ।

**इन्दुमती**—( हवनोत्तर माता कौशल्याने-- ) शहद, दही, अक्षत, औ घृतसे ब्राह्मणों द्वारा श्रीरामचन्द्रजीके मंगलके लिये स्वस्तिवाचन कर्म करवाया ॥

**ततस्तस्मैद्विजेन्द्राय राममाता यशस्विनी ।**
**दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥ ३१ ॥**

**अन्वयः**—ततः, यशस्विनी राममाता, तस्मै, द्विजेन्द्राय, काम्यां दक्षिणां, प्रददौ, च, राघवं, इदम् , अब्रवीत् ।

**सुधा**—ततः=स्वस्तिवाचनानन्तरं, यशस्विनी=कीर्त्तिमती, राममाता=कौशल्या, तस्मै=हवनकर्त्रे, द्विजेन्द्राय=ब्राह्मणश्रेष्ठाय, काम्यां=स्वाभिलषितां, दक्षिणां= कर्मसफलताप्राप्त्यर्थं द्रव्यं, प्रददौ = दत्तवती, च =पुनः, राघवं=रामम् , इदं = वक्ष्यमाणवचनम् , अब्रवीत् = अवोचत् ।

**इन्दुमती**—तदुत्तर ( स्वस्ति वाचन करवानेके पश्चात ) सुकीर्त्तिमती रामकी माता महारानी कौशल्याने उन श्रेष्ठ कर्मकाण्डी ब्राह्मणोंको यथेच्छ दक्षिणा दी और तदुपरान्त रामचन्द्रजीसे कहा—॥

**यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।**
**वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥**

**अन्वयः**—यत् , मङ्गलं, वृत्रनाशे, सर्वदेवनमस्कृते, सहस्राक्षे, समभवत्, तत् , मङ्गलं, ते भवतु ।

सुधा—यत् = यादृशं, मङ्गलं=विजयः, वृत्रनाशे=वृत्रासुरवधकाले(१) सर्वदेवनमस्कृते = सकलसुरवन्दिते, सहस्राक्षे = इन्द्रे, समभवत् = सञ्जातम्, तत्= तादृशं, मङ्गलं = विजयः, ते = तव, भवतु = अस्तु।

इन्दुमती—( कौशल्याने कहा— ) हे वत्स राम ! वृत्रासुरको मारनेके समय सब देवताओंसे नमस्कृत होनेपर जैसा मङ्गल इन्द्रको हुआ था, वैसा ही मङ्गल ( दण्डकारण्यमें ) तुम्हारा भी हो ॥

यन्मङ्गलं सुपर्णस्य विनिताकल्पयत्पुरा।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥

अन्वयः—पुरा, यत्, मङ्गलम्, अमृतं, प्रार्थयानस्य, सुपर्णस्य, विनिता, अकल्पयत्, तत्, ते, मङ्गलं, भवतु।

सुधा—पुरा=पूर्वस्मिन् समये कद्रूकृतपराभवसमय इत्यर्थः। यत्=यादृशं मङ्गलं = विजयः, अमृतं = पीयूषं, प्रार्थयानस्य = याचमानस्य, सुपर्णस्य = गरुडस्य, विनिता = गरुड़माता, अकल्पयत् = कृतवती, तत्=तादृशं ते = तव, मङ्गलं = विजयः, भवतु = अस्तु।

इन्दुमती—( कौशल्याने फिर कहा-हे पुत्र राम ! पहले गरुडकी माता विनिताकी देव-प्रार्थना करनेपर अमृत लानेके लिये प्रस्तुत गरुड़का जैसा मङ्गल हुआ था वैसा ही मंगल ( दण्डकारण्यमें ) तुम्हारा हो ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत्।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ३४ ॥

अन्वयः—अमृतोत्पादने, दैत्यान्, घ्नतः, वज्रधरस्य, यत्, मङ्गलं अदितिः, प्रादात्, तत्, मङ्गलं, ते, भवतु।

सुधा—अमृतोत्पादने = अमृतोत्पत्तिसमये, ( समुद्रमन्थनकाले ), दैत्यान्= असुरान्, घ्नतः = मारयतः, वज्रधरस्य=इन्द्रस्य, यत्, यादृशं, मङ्गलं = विजयः, अदितिः=कश्यपपत्नी, प्रादात् = दत्तवती, तत् = तादृशं, मङ्गलं = विजयः, ते = तव, भवतु = अस्तु।

( १ ) पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् तस्मादुद्भूतो वृत्रो नामासुरः। ततश्च भयभीता देवा भगवन्तं तुष्टुवुः। अथ तस्माल्लब्धवरा देवा इन्द्रं पुरस्कृत्य दधीचेराश्रमं जग्मुः। अनन्तरञ्च सम्प्रार्थ्य ततोऽस्थि प्राप्य तेन वज्रं निर्माय तेन वज्रेणाच वृत्रमिन्द्रो हतवानिति भागवतीया कथाऽनुसन्धेया।

**इन्दुमती**—( पुनश्च कौशल्याने कहा-हे वत्स ! ) इन्द्रकी माता अदितिने समुद्रसे अमृत निकालनेके समय दैत्योंको मारनेके लिये प्रस्तुत वज्रधारी इन्द्रको जैसा मंगल प्रदान किया वैसा ही यह (मेरा) मंगल तुम्हे (दण्डक वनमें) प्राप्त हो ॥

**त्रिविक्रमान् प्रक्रमतो विष्णोरतुलतेजसः ।**
**यदासीन्मङ्गलं राम ! तत्ते भवतु मङ्गलम् ॥ ३५ ॥**

**अन्वयः**—अतुलतेजसः, विष्णोः, त्रिविक्रमान्, प्रक्रमतः, यत्, मङ्गलम्, आसीत्, हे राम, तत्, मङ्गलम्, ते भवतु ।

**सुधा**—अतुलतेजसः=अतुलम्-अनुपमं, तेजः-पराक्रमं यस्य तस्य, विष्णोः=वेवेष्टि भुवनत्रयं पादत्रयेणेति विष्णुस्तस्य वामनाऽवतारस्य(१) मधुसूदनस्येत्यर्थः । त्रिविक्रमान्=वारत्रयपादविक्षेपान्, प्रक्रमतः=प्रकुर्वतः, यत्=यादृशं, मङ्गलं=विजयः, आसीत्=अभूत्, हे राम=वत्स । तत्=तादृशं, मङ्गलं विजयः, ते=तव, भवतु=अस्तु ।

**इन्दुमती**—( कौशल्याने कहा-हे आजानुबाहु वत्स राम । वामनावतारमें ) अतुलित तेज शाली विष्णु भगवान्का तीन वार पादप्रक्षेप करनेसे तीनों लोक नापनेमें जैसा मङ्गल ( विजय ) हुआ था वैसा ही मङ्गल ( दण्डकारण्यमें ) तुम्हारा हो ॥

**ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ताः ।**
**मङ्गलानि महाबाहो । दिशन्तु शुभमङ्गलम् ॥ ३६ ॥**

**अन्वयः**—हे महाबाहो ! ऋषयः, सागराः, द्वीपाः, वेदाः, लोकाः, (तथा) दिशश्च, मङ्गलानि दिशन्तु, ( मङ्गलानि च ) शुभमङ्गलम् दिशन्तु ।

**सुधा**—हे महाबाहो=दीर्घबाहो ! ऋषयः=भरद्वाजादिप्रभृतयः, सागराः=क्षीरनिधिप्रभृतयः, द्वीपाः=अन्तर्वारितटानि, समुद्रमध्यवर्तिप्रदेशा इति यावत् । **यद्वा**—जम्बू १ प्लक्ष २ शाल्मली ३ कुश ४ क्रौञ्च ५ शाक ६ पुष्कर ७ एते सप्त-द्वीपाः, वेदाः=ऋगादयः, लोकाः=चतुर्दशभुवनानि, ताः=प्रसिद्धाः, दिशः=प्राच्या-

(१) पुरा कश्यपाददित्यां भगवान् वामनः प्रादुर्बभूव । स च कदाचिन्मुनिभिर्दैत्यैश्चोपनीतः बलियज्ञशालायां गतः तत्रासुराधिपो बलिर्यथोक्तविधिना तमर्चयामास। अथ तत्र भगवान् तेभ्यः केवलं पादत्रयमितभूमियाचनं कृतवान्। ततो गुरुणा शुक्रेण मुहुर्मुहुर्निषिद्धोऽपि बलिस्तस्मै पादत्रयमितभूमिदानं ददौ । ततो विराड्रूपं गृहीत्वा पादत्रयेणैव त्रीँल्लोकान् जिगायेति भागवतीया कथा ।

दयश्च, मङ्गलानि = शुभानि, दिशन्तु = ददतु, (तानि च) ( ते ) शुभमङ्गलं = मङ्गलानामपि मङ्गलम् , दिशन्तु = ददतु ।

**इन्दुमती**—( कौशल्याने फिर कहा–हे वत्स राम ! ) सप्त ऋषिगण, चारों समुद्र, सातो द्वीप ( समुद्रके मध्यवर्ती तट–प्रदेश; लङ्का आदि ), चारो वेद, चौदहो भुवन तथा दशो दिशायें तुम्हारा शुभ मङ्गल करें और वह मङ्गल तुम्हारा अतिशय मङ्गल दायक हो अर्थात् मङ्गलपर मंगल तुम्हें वनमें होता रहे ॥

**इति पुत्रस्य शेषाश्च कृत्वा शिरसि भामिनी ।**
**गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३७ ॥**
**ओषधीं च सुसिद्धार्थां विशल्यकरणीं शुभाम् ।**
**चकार रक्षां कौशल्या मन्त्रैरभिजजाप च ॥ ३८ ॥**

**अन्वयः**—इति ( उक्त्वा ) आयतलोचना भामिनी कौशल्या पुत्रस्य, शिरसि, शेषाश्च, कृत्वा, गन्धैश्चापि, समालभ्य, सुसिद्धार्थां, विशल्यकरणीम् , ओषधीं, च ( गुलकीकृत्य ) शुभां, रक्षां चकार (तां) मन्त्रैः, अभि=जजाप च ।

**सुधा**—इति = पूर्वोक्तक्रमेण ( उक्त्वा ) आयतलोचना = दीर्घनेत्रा, भामिनी = सौभाग्यवती, कौशल्या = राममाता, पुत्रस्य = स्वतनयस्य, शिरसि = मस्तके, शेषाश्च=अक्षताश्च, कृत्वा, गन्धैश्चाऽपि=अनेकविधचन्दनैश्चापि, समालभ्य = विलिप्य, सुसिद्धार्थां = सुसिद्धः-परीक्षितः, अर्थः=फलं यस्याः तां, विशल्यकरणीम् = अन्तर्गतशल्यनिर्गमनकारिणीम् , ओषधीं = मूलिकां (गुलकीकृत्य) शुभां=मङ्गलप्रदां, रक्षां, चकार=रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः । (तां) मन्त्रैः=पौराणिकमन्त्रविशेषैः, अभिजजाप = अभिमन्त्रयामास ।

**इन्दुमती**—इस प्रकार मंगल पाठ करके सौभाग्यवती रामकी माता विशालाक्षी कौशल्याजीने वनगमनोद्यत अपने पुत्र श्रीरामचन्द्रजीके मस्तकपर मंगलाक्षत चढ़ाकर चन्दन लगाया और तदुपरान्त प्रत्यक्ष फल देनेवाली विशल्यकर्णी नामका औषधि विशेष (जिसके लगाने से शरीरमें घुसा हुआ वाण ठहर नहीं सकता; अपने आप निकल आता है, वह ) लगाया तथा ( हाथमें ) मंगलप्रद रक्षिका बन्धन किया एवं तंत्रोक्त रीतिसे मंत्र–जप करके उसे अभिमंत्रित कर दिया ॥

**उवाचापि प्रहृष्टेव सा दुःखवशवर्त्तिनी ।**
**वाङ्मात्रेण न भावेन वाचा संसज्जमानया ॥ ३९ ॥**

**अन्वयः**—सा, दुःखवशवर्त्तिनी, अपि, प्रहृष्टा, इव, संसज्जमानया, वाचा, उवाच ( तत्र ) वाङ्मात्रेण, न, ( किन्तु ) भावेन।

**सुधा**—सा=प्रसिद्धा, दुःखवशवर्त्तिनी अपि=वियोगजनितदुःखाक्रान्ताऽपि, प्रहृष्टा इव, पुत्रमुखोल्लासार्थं सन्तुष्टेव भावयन्तीत्यर्थः। संसज्जमानया = अत्यासक्तिबोधिकया, स्खलन्त्या वा, वाचा=वाण्या, उक्तवती ( तत्र ) वाङ्मात्रेण केवलवचनेन, नोवाच, ( किन्तु ) भावेन = अतिप्रेम्णा उक्तवतीत्यर्थः। यद्वा-पूर्वं मनसाभिजजाप, सम्प्रति च मन्त्रानुसन्धानेन रामस्य हृत्प्रसादार्थम्, उवाचापि = मन्त्रानितिशेषः, जपोत्तरं स्पष्टमपि मन्त्रानुच्चारयामासेत्यर्थः। अत्रार्थे संसज्जमानया = खिन्नमानसयेत्यर्थो ज्ञेयः।

**इन्दुमती**—( चन्दनादि लेपनके पश्चात् ) वह रामकी माता महारानी कौशल्या पुत्र-वियोगजन्य दुःखसे आक्रान्त होती हुई ( राम-वन-यात्राके समय अमांगलिक बुद्ध्या जबरन अश्रुपातको रोकती हुई) भी हर्षित होकर बोलने लगी, किन्तु बोल न सकी, पुत्र-स्नेह उमड़ आया और उनकी वाणी गद्-गद हो गयी।

**आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी।**
**अवदत्पुत्रमिष्टार्थो गच्छ राम ! यथासुखम् ॥ ४० ॥**

**अन्वयः**—यशस्विनी, पुत्रम्, आनम्य, मूर्ध्नि, आघ्राय, च परिष्वज्य, हे राम ! इष्टार्थः, ( त्वं ) यथासुखं, गच्छ, (इति) अवदत्।

**सुधा**—यशस्विनी = कीर्त्तिमती ( कौशल्या ) पुत्रं = रामम्, आनम्य = आनमय्य, मूर्ध्नि = शिरसि, आघ्राय = घ्राणं विधाय, च = पुनः, परिष्वज्य = आलिङ्ग्य, हे राम=हे वत्स ! इष्टार्थः = इष्टः-अभिलषितः, अर्थः-देवप्रयोजनं यस्य स तथोक्तः, ( त्वं ) यथासुखं = सुखमनतिक्रम्य, गच्छ = व्रज, ( इति ) अवदत्=अगदत्।

**इन्दुमती**—( अन्तमें राम-वनगमनके समय ) कीर्तिमती रामकी माता महारानी कौशल्या पुत्रस्नेहसे विह्वल हो गयीं। उन्होने वनगमनोद्यत अपने स्नेही पुत्र श्रीरामचन्द्रजीको हृदयसे लगा लिया, और अतिस्नेहसे उनका मस्तक सूंघ कर पीठपर हाथ फेरती हुई कहा-हे वत्स राम ! अब जहां तुम्हारी इच्छा हो वहां सुखसे चले जाओ ( दण्डकारण्यमें निःशंक होकर घूमो और अपना इष्ट साधन ( निशाचरवध ) करो ॥

**अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् ।**
**पश्यामि त्वां सुखं वत्स ! सन्धितं राजवर्त्मसु ॥ ४१ ॥**

**अन्वयः**—हे वत्स ! अरोगं, सर्वसिद्धार्थम्, अयोध्यां, पुनः आगतम्, राजवर्त्मसु, संधितं, त्वां, सुखं, पश्यामि ।

**सुधा**—हे वत्स = पुत्र ! अरोगं = रोगरहितं, सर्वसिद्धार्थं=लब्धसकलमनोरथम्, अयोध्यां = राजधानीं, पुनः=भूयः, आगतं = प्राप्तं, राजवर्त्मसु=राजपद्धतिषु, संधितम्=आस्थावन्तं प्राप्तराज्यमित्यर्थः । त्वां = भवन्तं, सुखं = सुखपूर्वकं (यथास्यात्तथा क्रियाविशेषणमिदम्), पश्यामि=द्रक्ष्यामीत्यर्थः ।

**इन्दुमती**—( माता कौशल्याने वन प्रस्थानके समय अपने स्नेही पुत्र रामसे पुनः कहा-हे वत्स ! अब तुम जाओ और वनमें ) आरोग्य शरीरसे सभी मनोरथ ( पित्राज्ञापालन करते हुए निशाचरोंका वध ) सिद्ध करके फिर ( १४ वर्षके बाद ) अयोध्या लौट आओ । हे पुत्र ! (वनसे लौटकर) जब तुम राजा होगे तब तुमको देखकर मैं बहुत ही सुख पाऊँगी ॥

**प्रणष्टदुःखसंकल्पा हर्षविद्योतितानना ।**
**द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥**

**अन्वयः**—प्रणष्टदुःखसंकल्पा, हर्षविद्योतितानना (सती अहं) वनात्, प्राप्तं, त्वाम्, उदितं, पूर्णचन्द्रमिव, द्रक्ष्यामि ।

**सुधा**—प्रणष्टदुःखसंकल्पा = दुःखस्य—क्लेशस्य, संकल्पः = मानसं कर्म वने रामस्य किं भविष्यतीति चिन्तात्मकमित्यर्थः, प्रणष्टः – व्यपगतः दुःखसंकल्पो यस्याः सा तथोक्ता, हर्षविद्योतितानना—हर्षेण = रामागमनरूपानन्देन, विद्योतितम्—अतिदीप्तम्, आननं—मुखं यस्याः सा तथोक्ता ( सती अहं ) वनात्= अरण्यात्, प्राप्तम् = आगतं, त्वां = भवन्तम्, उदितम् = उदयाचलसंस्थितं, पूर्णचन्द्रं = सम्पूर्णेन्दुमिव, द्रक्ष्यामि = अवलोकयिष्यामि ।

**इन्दुमती**—(कौशल्याने कहा-) हे वत्स ! पूर्णमासीके उदित पूर्णचन्द्रकी तरह वनसे लौटकर आये हुए तुम्हारा प्रसन्न वदन को देखकर मेरे मनकी सभी चिन्तायें दूर हो जायँगी और उस समय हर्षसे मेरा मुख प्रसन्न हो जायगा ॥

**भद्रासनगतं राम ! वनवासादिहागतम् ।**
**द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः ॥**

**अन्वयः**—हे राम ! वनवासात् , पुनः, इह, आगतं, भद्रासनगतं च, पितुः, वचः, तीर्णवन्तं, तु, त्वां, द्रक्ष्यामि ।

**सुधा**—हे राम = हे वत्स ! वनवासात् = विपिननिवासात् , पुनः=भूयः, इह = अयोध्यायाम् , आगतं = प्राप्तं, भद्रासनगतं = राज्यसिंहासनस्थं, च = तथा, पितुः = राज्ञः, वचः = वचनं तीर्णवन्तम्=उत्तीर्य्य पारंगतं, तु, त्वां = रामं, द्रक्ष्यामि = अवलोकयिष्यामि ।

**इन्दुमती**—( कौशल्याने अपने भावी मनोरथसिद्धकी चर्चा करती हुई पुनः कहा— ) हे वत्स ! पिताकी आज्ञापालनकरके वनसे अयोध्या लौटनेके बाद भद्रासन ( राजसिंहासन ) पर बैठे हुए जब तुम्हें मैं देखूंगी । ( तब मुझे बहुत ही आनन्द होगा ) ॥

**मङ्गलैरुपसम्पन्नो वनवासादिहागतः ।**
**वध्वाश्च मम नित्यं त्वं कामान् संवर्ध याहि भोः ॥ ४२ ॥**

**अन्वयः**—मङ्गलैः, उपसम्पन्नः, त्वं, याहि, भोः, वनवासात् , इह, आगतः, ( सन् ) मम, वध्वाश्च, कामान् , नित्यं, संवर्ध ।

**सुधा**—मङ्गलैः = राजोचितवस्त्राभरणैः स्वस्त्ययनादिभिश्च, त्वं, याहि=गच्छ, भोः='भोः' इति निपात आमन्त्रणे वर्त्तते । वनवासात् = दण्डकारण्यनिवासात् , इह = अयोध्यायाम् , आगतः = प्राप्तः ( सन् ) मम = कौशल्यायाः, वध्वाः = सीतायाश्च, कामान्=काम्यमाननववस्त्रादीनि, नित्यं = प्रतिदिनं, संवर्ध= वर्धयस्व, आर्षत्वादात्मनेपदलक्षणस्यानित्यत्वाद्वात्र परस्मैपदमित्यवगन्तव्यम् ।

( पुनश्च माता कौशल्याने कहा- ) हे वत्स राम ! अब तुम वनजाओ और वनसे लौटकर राजोचित वस्त्रालंकरणोंको धारण करके ( राजा बनकर ) वधू (सीता) के और मेरे मनोरथको सदा पूर्ण करो ॥

**मयार्चिता देवगणाः शिवादयो महर्षयो भूतगणाः सुरोरगाः ।**
**अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ! ॥४३॥**

हे राघव ! मया, अर्चिताः, देवगणाः, शिवादयः, महर्षयः, भूतगणाः, सुरोरगाः, दिशश्च, चिराय, वनम् , अभिप्रयातस्य, ते, हितानि, काङ्क्षन्तु ।

**सुधा**—हे राघव = राम ! मया = कौशल्यया, अर्चिताः = पूजिताः, देवगणाः = गणदेवताः, शिवादयः = महेश्वरप्रभृतयः, महर्षयः = भरद्वाजादयः, भूतगणाः=विद्याधरादयो देवयोनिविशेषाः, सुरोरगाः = सुराः-इन्द्रादयः, उरगाः

शेषप्रभृतयः, सुराश्च उरगाश्चेति सुरोरगाः, दिशः = प्राच्यादयः, चिराय=वहु कालं, वनं = दण्डकारण्यम् , अभिप्रयातस्य=गच्छतः, ते=तव रामस्य, हितानि= प्रियाणि, काङ्क्षन्तु = अभिलषन्तु कुर्वन्त्वित्याशयः, सर्वत्र पुत्रप्रेमपारवश्यात् पुनरुक्तिर्न दोषाय।

**इन्दुमती**—( पुत्रवत्सला माता कौशल्याने पुनः आशीर्वाद देती हुई कहा—) हे पुत्र राघव ! मैंने जिन शंकरादि देवताओंकी, वशिष्ठादि महर्षियों की, विद्याधरादि भूतगणोंकी, इन्द्रादि देवताओंकी और शेषनाग प्रभृति दिव्य सर्पों की पूजा की है वे सब तथा दशो दिक्पाल चिरकाल ( १४ वर्ष ) पर्यन्त वनयात्रामें तुम्हारा कल्याण करते रहें ॥

**अतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ।**
**प्रदक्षिणं चाऽपि चकार राघवं पुनः पुनश्चाऽपि निरीक्ष्य सस्वजे ॥४४॥**

**अन्वयः** = अतीव, अश्रुप्रतिपूर्णलोचना, स्वस्त्ययनं, यथाविधि, समाप्य, च राघवं, प्रदक्षिणं, चाऽपि, चकार, पुनः पुनश्च, निरीक्ष्य, सस्वजे, अपि ।

**सुधा**--अतीव-अत्यन्तम् , अश्रुप्रतिपूर्णलोचना = अश्रुणा—रोदनजन्य-नेत्रजलेन, प्रतिपूर्णे-परिपूर्णे-लोचने=नयने यस्याः सा तथोक्ता कौशल्या, स्वस्त्ययनं = पुण्याहवाचनं, यथाविधि = शास्त्रोक्तप्रकारेण, समाप्य = संपाद्य, च = तथा, राघवं-रामं, प्रदक्षिणं = "चतुर्दिक्षुभ्रमणञ्चाऽपि, चकार = कृतवती, पुनः पुनश्च = भूयोभूयश्च, निरीक्ष्य = अवलोक्य, सस्वजे = आलिलिङ्ग, अपि । यद्यपि पुत्रस्य मात्रा प्रदक्षिणमनुचितमिवाभाति तथापि मातृप्रदक्षिणकरणेन पुत्रस्येष्टसिद्धिर्भवतीति धर्मशास्त्रे प्रसिद्धम् ।

**इन्दुमती**—इस प्रकार राम-वन गमनके समय आशीर्वाद देकर माता कौशल्याने यथाविधि स्वस्तिवाचन कर्म पूरा किया और नेत्रोंमें आंसू भरकर अपने पुत्र श्री रामचन्द्रजीकी प्रदक्षिणा की और बार बार ( अपलक दृष्टिसे ) उनके मुख को देखती हुई रामजीको पुनः हृदयसे लगा लिया (पुत्रस्नेहसे विह्वल हो गयीं) ।

**तया हि देव्या च कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।**
**जगाम सीतानिलयं महायशाः स राघवः प्रज्वलितस्तया श्रिया ॥४५॥**

इत्यार्षे श्रीमद्रामायणे बाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चविंशः सर्गः ।

---

**अन्वयः**—च, तया, देव्या, कृतप्रदक्षिणः, हि, महायशाः, सः, राघवः,

पुनः पुनः, मातुः, चरणौ, निपीड्य, तया, श्रिया प्रज्वलितः, सीतानिलयं, जगाम ।

**सुधा**—च=ततः, तया=कौशल्यया, देव्या=पट्टराज्ञ्या, कृतप्रदक्षिणः=विहितचतुर्दिग्भ्रमणः, हि, महायशाः=विपुलकीर्त्तिमान् , स, राघवः=रामः, पुनः पुनः=भूयो भूयः, मातुः=कौशल्यायाः, चरणौ=पादौ, निपीड्य=निपीडनपूर्वकमभिवाद्येत्यर्थः, तया=मातृसेवाजनितया, श्रिया=शोभया, प्रज्वलितः=प्रदीप्तः, (सन् ) सीतानिलयं=सीताभवनं, जगाम=गतवान् ।

इति श्रीवाल्मीकीयरामायणेऽयोध्याकाण्डे "सुधा" टीकायां पञ्चविंशः सर्गः ।

---

**इन्दुमती**—इस प्रकार जब माता कौशल्याने रामकी प्रदक्षिणा करके उन्हे हृदयसे लगालिया तब रामचन्द्रजीने पुनः २ अपनी माताके चरणों पर झुककर उन्हे साष्टांग प्रणाम किया। तदुपरान्त स्वतः सिद्ध शोभासे दीप्तिमान् महाप्रतापी श्रीरामचन्द्रजी सीताजीके घर ( उन्हे भी सान्त्वना देनेके लिये ) चलदिये ।

इस प्रकार इन्दुमतीटीकामें अयोध्याकाण्डका २५ वाँ सर्ग समाप्त हुआ ।

---

## अथ षड्विंशः सर्गः

## पतिव्रता सीता

**अभिवाद्य तु कौशल्यां रामः सम्प्रस्थितो वनम् ।**
**कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥**

**अन्वयः**—धर्मिष्ठे, वर्त्मनि, स्थितः, मात्रा, कृतस्वस्त्ययनः, तु, रामः, कौशल्याम् , अभिवाद्य, वनं संप्रस्थितः, ( आसीत् ) ।

**सुधा**—एवं मातरं रामो यथाकथञ्चिदनुमान्य, सीतामप्यनुमानयितुं गत इति दर्शयितुमाह-**अभी**ति। धर्मिष्ठे=अतिशयेन धर्मवति, वर्त्मनि=मार्गे, स्थितः=वर्त्तमानः, मात्रा=कौशल्यया, कृतस्वस्त्ययनः=कृतं–विहितं, स्वस्त्ययनं–पुण्याऽहं यस्य स तथोक्तः, कृतमङ्गलस्त्वित्यर्थः। रामः, कौशल्यां=स्वमातरम् , अभिवाद्य=प्रणम्य, वनं=दण्डकारण्यं, संप्रस्थितः=गन्तुं प्रवृत्तः आसीदिति शेषः ।

**इन्दुमती**—अपनी माता महारानी कौशल्या द्वारा स्वस्तिवाचन होजाने पर सर्वश्रेष्ठ (पिताकी आज्ञापालनरूप) धर्म–मार्गमें स्थित श्री रामचन्द्रजी माताको प्रणाम करके वन जानेके लिये प्रस्तुत हुए ( वल्कल धारण करनेके लिये अपने महलकी तरफ जहां उनकी प्राणेश्वरी सती सीताजी रहती थी, चले )॥

**विराजयन् राजसुतो राजमार्गं नरैर्वृतम्।**
**हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥**

**अन्वयः**—राजसुतः, नरैः, वृतं, राजमार्गं, विराजयन्, गुणवत्तया, जनस्य, हृदयानि, आममन्थ इव।

**सुधा**—मार्गवृत्तान्तं निरूपयन्नाह—**विराजयन्निति**। राजसुतः=राजपुत्रः श्रीरामः, नरैः=स्वदर्शनाकांक्षिजनैः, वृतं=युतं, राजमार्गं=राजपन्थं, विराजयन्, (सन्) गुणवत्तया=प्रियवादिगुणविशिष्टत्वेन, हेतुना, जनस्य=अयोध्यास्थसर्वलोकस्य, हृदयानि=चेतांसि "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। आममन्थ इव=आलोडयामासेव।

**इन्दुमती**—(अचानक रामवन गमनका समाचार सुनकर अयोध्यावासी व्यथित हो उठे और वेदना प्रकट करते हुए रामचन्द्रजीका दर्शन करनेके लिये राज-भवनकी सड़कके दोनों तरफ खड़े हो गये। इसी बीच—महाराज-कुमार श्रीरामचन्द्रजी (माता कौशल्याके भवनसे निकल कर) दर्शनार्थियोंसे भरा हुआ मार्गको सुशोभित करते तथा अपने सद्‌गुणोंके प्रभावसे अयोध्यावासियोंके हृदयको मथन करते हुए (अर्थात् राम-राज्याभिषेकसे उत्फुल्ल उनके हृदयपर हठात् आघात पहुँचाते हुए) वल्कल धारण करनेके पूर्व प्राणेश्वरी सती सीताजी से मिलनेके लिये अपने महलकी ओर चले॥

**वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी**
**तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥**

**अन्वयः**—तपस्विनी, वैदेही, च, अपि, तत्सर्वं, न, शुश्राव, तस्याः च हृदि, तदेव यौवराज्याभिषेचनम्, स्थितम्, आसीत्।

**सुधा**—तपस्विनी=रामाऽभिषेकार्थव्रतोपवासादिनियमविशिष्टा वैदेही जानकी चाऽपि, तत्सर्वम्=अभिषेकविधानादिकं, न=नहि, शुश्राव=श्रुतवती, तस्याश्च=वैदेह्याश्च, हृदि=मनसि, तदेव=पूर्वनिश्चितमेव, यौवराज्याऽभिषेचनं=युवराजपदप्रापणम्, (स्थितमासीत्) यद्वा—तपस्विनी=सर्वविषयकनित्यज्ञानविशिष्टा, चाऽपि वैदेही, तत्सर्वं=रामवनवासादिकं, शुश्राव=श्रुतवती, तदेव=तद्वनगमनमेव, चह्यर्थे, तस्या हृदि स्थितमासीत् (अत एव यौवराज्याऽभिषेचनं नासीदिति=ध्वन्यते।

**इन्दुमती**—(रामचन्द्रजी माता कौशल्याजीसे मिलकर बन जानेके लिये

प्रस्तुत होकर सीताजीसे मिलनेके लिये चले, परन्तु- ) अभीतक यह (कैकेयीके कुचक्रसे रङ्गमें भङ्ग; राज्याभिषेकके बदले चौदह वर्षका वनवास, होनेका ) सारा वृत्तान्त, वह तपस्विनी ( तपसे रामको प्राप्त करनेवाली ) महात्मा जनककी पुत्री रामकी प्राणेश्वरी सती सीताजी नहीं सुन पाई थीं। उनके मनमें उस समय श्रीरामचन्द्रजीके राज्याभिषेककी ही बात बनी थी ( इस लिये अभीतक वे उसी रंगमें मस्त थीं )॥

**देवकार्यं स्म सा कृत्वा कृतज्ञा हृष्टचेतना ।**
**अभिज्ञा राजधर्माणां राजपुत्री प्रतीक्षति ॥ ४ ॥**

**अन्वयः**—कृतज्ञा, हृष्टचेतना, राजधर्माणाम्, अभिज्ञा, सा, राजपुत्री, देवकार्यं, कृत्वा, प्रतीक्षति, स्म ।

**सुधा**—कृतज्ञा = देवादिप्रार्थनाज्ञात्री, यद्वा-अभिषिक्तस्वामिविषये गन्धपुष्पादिना पट्टमहिषीभिः कृतपादाऽभिवादादिवृत्तान्तज्ञा । हृष्टचेतना = प्रफुल्लस्वान्ता, राजधर्माणाम् = अभिषिक्तराजाऽसाधारणलक्षणश्वेतच्छत्रचामरपुरस्कृतभद्रासनादीनाम् , अभिज्ञा = तत्त्ववेत्त्री सा = प्रसिद्धा, राजपुत्री=जनकसुता, देवकार्यम् = देवार्चनम् , कृत्वा = सम्पाद्य, प्रतीक्षति स्म=तदासने स्वामिना सह कदा स्थास्यामीति कालं यापयतिस्मेत्यर्थः । आर्षत्वादेव परस्मैपदपाठः ।

**इन्दुमती**—(जब वनगमनके लिये प्रस्तुत होकर सीताजीसे मिलनेके लिये उनके पासतक रामचन्द्रजी पहुँच रहे थे तब, उस समय) राज्याभिषेक समयके माङ्गलिक विधिको जाननेवाली तथा शशिप्रभ छत्र, चामर, सिंहासनादि राजचिन्होंको जानने वाली राजा जनककी पुत्री श्री सीताजी देवी-देवताओंकी पूजाकरके प्रसन्न मनसे राज-पुत्र ( युवराज ) श्रीरामचन्द्रजीकी अभ्यर्थना करनेके लिये प्रतीक्षा कर रही थीं॥

**प्रविवेशाऽथ रामस्तु स्ववेश्म सुविभूषितम् ।**
**प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५ ॥**

**अन्वयः**—अथ, ह्रिया, किञ्चिद् , अवाङ्मुखः, (इव) रामः, तु, प्रहृष्टजनसंपूर्णं, सुविभूषितं, स्ववेश्म, प्रविवेश ।

**सुधा**—अथ=यथाक्रमं किञ्चिद्राजमार्गातिक्रमणानन्तरम् , ह्रिया=स्वमातापितृकृतमिदमन्याय्यं कथं कथयिष्यामीति हेतोः लज्जया । यद्वा-मद्वनगमने नूनं सीताऽपि गमिष्यति परन्तु पित्राज्ञापनमन्तरा कथमिमां सह नेष्यामीति हेतोः

लज्जया, किञ्चित्=ईषत्, अवाङ्मुखः=न वाक्-वचनं, मुखे-वदने, यस्य स तादृशः (इव)। रामस्तु, प्रहृष्टजनसंपूर्णं = प्रहृष्टैः-रामाऽभिषेचनेन प्रमुदितैः, जनैः-नगरस्थैः, संपूर्णं-व्याप्तं, सुविभूषितम् = चित्रादिभिःशोभितं, स्ववेश्म = स्वगृहं, प्रविवेश = प्रविष्टवान्।

**इन्दुमती**—(सीताजी प्रतीक्षा कर ही रही थीं कि) इतने ही में श्रीरामचन्द्रजीने राज्याभिषेकोत्सव पर सुन्दर २ प्रतिमाओंसे चित्रित होकर सुसज्जित अत्यन्त मनोहर अपने भवनमें; जहां सीताजी थीं, लज्जासे किञ्चित् मुख नीचे किये हुए (चुप-चाप) प्रवेश किया (लज्जा इस बातकी हुई कि माता कैकेयीके कुचक्रसे मैं वन जारहा हूँ, यह सीतासे कैसे कहूँ !)॥

**अथ सीता समुत्पत्य वेपमाना च तं पतिम्।**
**अपश्यच्छोकसन्तप्तं चिन्ताव्याकुलितेन्द्रियम्॥ ६॥**

**अन्वयः**—अथ, वेपमाना, सीता, समुत्पत्य, चिन्ताव्याकुलितेन्द्रियं, शोकसन्तप्तं, च, तं, पतिम्, अपश्यत्।

**सुधा**—अथ = रामस्य स्वगृहप्रवेशानन्तरं, वेपमाना=पूर्वमिव रामकर्तृकवचनोच्चारणाभावेन कम्पमाना। यद्वा-स्वामिनः विगतहर्षत्वावाङ्मुखत्वाद्यवलोकनात्कम्पमाना, सीता = जनकनन्दिनी, समुत्पत्य = स्वासनादुत्थाय, चिन्ताव्याकुलितेन्द्रियं = चिन्तया—इमां सह कथं नयामीति विचारेण। यद्वा-भाविदुःखस्मरणरूपचिन्तया, व्याकुलितानि--व्यथितानि, इन्द्रियाणि = चक्षुरादीनि यस्य तं तथोक्तं, शोकसन्तप्तं = शोकेन-उक्तविचारहेतुकशुचा, सन्तप्तं = क्लिन्नं तं=गृहस्थितं, पतिं=भर्त्तारम्, अपश्यत् = अवलोकितवती।

**इन्दुमती**—महलमें प्रवेश करनेके बाद रामचन्द्रजीको शोक और चिन्तासे व्याकुल देखकर सीताजी सहम गयीं और कांपती हुई आसनसे उठ खड़ी हो गयी॥

**तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम्।**
**तं शोकं राघवः सोढुं ततो विवृततां गतः॥ ७॥**

**अन्वयः**—हि, धर्मात्मा, स, राघवः, तां, दृष्ट्वा, मनोगतं, तं शोकं सोढुं, न, शशाक, ततः, विवृततां, गतः।

**सुधा**—हि = यतः, धर्मात्मा = धार्मिकः। स, राघवः = रामः, तां = सीतां, दृष्ट्वा = निरीक्ष्य, मनोगतं = चेतसि विद्यमानं, तं = सीतानयनयुक्त्यभाव-मूलकसंभावितसीतावियोगजनितं, शोकम्=अन्तस्तापं, सोढुं=सहनकर्त्तुं, न शशाक = न

समर्थो बभूव, ततः=सोढुमशक्तादेव हेतोः, विवृततां=विवर्णतां, गतः=प्राप्तः ।

इन्दुमती—धर्मात्मा श्रीरामचन्द्रजी अपनी प्राणेश्वरी सीताको देखकर अपने मानसिक ( प्रिया-वियोग जनित ) शोकोद्वेग को नहीं रोक सके उनका चेहरा उतर गया ॥

**विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।**
**आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ! ॥ ८ ॥**

**अन्वयः**—प्रस्विन्नम्, अमर्षणम्, विवर्णवदनं, तं, दृष्ट्वा, दुःखाऽभिसन्तप्ता, ( सीता ) प्रभो ! इदानीम्, इदं, किम् ( इति ) आह ।

**सुधा**—रामाभिप्रायविज्ञानजनकं सीताप्रश्नं वर्णयति—विवर्णेति । प्रस्विन्नं=करतलगतराज्यस्यागामित्वं स्वकीयवनगमनप्रयासञ्च कथमेनां कथयिष्यामीति शोकजस्वेदम्, अमर्षणं=तच्छोकधारणस्य नियन्तुमक्षमं, तं=रामं; दृष्ट्वा=अवलोक्य दुःखाऽभिसंतप्ता=चेष्टालक्षिततद्दुःखजनितदुःखेनाऽभिसंतप्ता ( सीता ) हे प्रभो = हे स्वामिन् ! इदानीं = हर्षकाले, इदं = वैवर्ण्यादिकं दौःस्थ्यं, किं=कथम् (इति) आह = उवाच ।

**इन्दुमती**—सीताजीने अत्यन्त शोकाकुल तथा पसीनासे तर रामचन्द्रजीका उतरा हुआ फीका चेहराको देख अत्यन्त दुःखसन्तप्त होकर पूछा—हे प्रभो स्वामिन् ! यह क्या हुआ ? ( क्यों इस तरह आप घबड़ाये, हुए हैं ? ) ॥

**अद्य बार्हस्पतः श्रीमान् युक्तः पुष्येण राघव !**
**प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥**

**अन्वयः**—हे राघव ! अद्य, श्रीमान्, बार्हस्पतः, पुष्येण (युक्तः) (इति) प्राज्ञैः, ब्राह्मणैः, प्रोच्यते, ( तत् ) केन, त्वं दुर्मनाः, असि ।

**सुधा**—हे राघव = हे राम ! अद्य = इदानीं, श्रीमान् = कमारम्भकर्त्तॄणां सकलसमृद्धिप्रापकः, बार्हस्पतः=बृहस्पतिदैवतः अस्ति, पुष्येण = पुष्यनक्षत्रेण, युक्तः = अभिषेकयोग्यः,, ( इति ) प्राज्ञैः=बुद्धिमद्भिः, ब्राह्मणैः = विप्रैः प्रोच्यते= कथ्यते, सर्वथा हर्षकालोऽयमित्याशयः ( तत् ) केन = हेतुना, त्वं, दुर्मनाः= हर्षं विहायोदासीनचित्तः, असि = भवसि ।

**इन्दुमती**—( सीताजीने कहा-) हे आर्यपुत्र राघव ! विद्वान् ब्राह्मणलोग ( गुरु वशिष्ठ आदि ) आजका दिन राज्याभिषेकके लिये बहुत अच्छा बता रहे हैं । क्योंकि आज लग्नमें सर्व सम्पत्तिदायक श्रीमान् बृहस्पतिजी बैठे हैं तथा सर्व

सिद्धिकर पुष्य नक्षत्र का योग है फिर आप ऐसे चिन्तित क्यों हैं प्रभो ! ॥

न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गु छत्रेणाऽभिविराजते ॥ १० ॥

**अन्वयः**—शतशलाकेन, च जलफेननिभेन, छत्रेण, आवृत्तं, वल्गु, ते, वदनं, न, अभिविराजते ।

**सुधा**—शतशलाकेन=शतसंख्याकाः, शलाकाः यस्मिन् (छत्रे) तेन तथोक्तेन, च=तथा जलफेननिभेन=जले-सलिले यः फेनः हिण्डीरः "हिण्डीरोऽब्धिकफः फेनः" इत्यमरः । तन्निभेन तत्सदृशेन ( सादृश्यं च श्वेतत्वेनेत्यवधेयम् ) छत्रेण=आतपत्रेण "छत्रं त्वातपत्रम्" इत्यमरः । आवृतम्=आच्छादितं, वल्गु= सुन्दरं, ते=तव, वदनं=मुखं, न अभिविराजते = नाभिशोभते, अत्र किं कारण-मिति वदेति भावः ।

**इन्दुमती**—(शशि प्रभव छत्र और उभय पार्श्ववर्त्ती चामर ये तीन मुख्य राज-चिन्ह हैं । अतः यथाक्रमसे पहले छत्रके बारेमें ही सीताजीने पूछा- ) हे आर्यपुत्र ! सौ कमानियोंका बना हुआ तथा जल-फेनके समान श्वेत राज-छत्र से आच्छादित आपका सुन्दर मुख विराजमान क्यों नहीं है ( आज आपके मस्तकपर तना हुआ राज-छत्र नहीं देखती , इसका क्या कारण है ? ) ।

व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥

**अन्वयः**—चन्द्रहंसप्रकाशाभ्यां, मुख्याभ्यां, च, व्यजनाभ्यां, शतपत्रनिभेक्षणं, तव, आननं, न, वीज्यते ।

**सुधा**—चन्द्रहंसप्रकाशाभ्यां = चन्द्रः-शशी, हंसः-मानसौकाः, तयोः प्रकाशाविव प्रकाशौ ययोस्ताभ्यां तथोक्ताभ्याम्, अतिधवलाभ्यामित्यर्थः । मुख्याभ्यां= प्रधानाभ्यां चक्रवर्त्तिमात्रवृत्तिभ्यामित्यर्थः । व्यजनाभ्यां=चामराभ्याम् , शतपत्र-निभेक्षणं=शतपत्रं कमलं, ('शतपत्रं कमलमि'त्यमरः ) तन्निभे-तत्सदृशे, ईक्षणे-नयने यस्य तत् तथोक्तम् । तव=भवतः, आननं=मुखं, न=नहि, वीज्यते= पवनयुक्तं क्रियते, अत्राऽपि हेतुं वदेत्याशयः ।

**इन्दुमती**—(छत्रके पश्चात् चामरके बारेमें सीताजीने पूछा— ) हे नाथ ! क्या कारण है कि आज कमलके सदृश सुन्दर २ नेत्रोंसे युक्त आपका सुन्दर मुखके उभय पार्श्वमें चन्द्रमा और हंसके समान शुभ्र चामर नहीं डोल रहे हैं ।

**वाग्मिनो वन्दिनश्चाऽपि प्रहृष्टास्त्वां नरर्षभ !।**
**स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२ ॥**

**अन्वयः**—हे नरर्षभ ! प्रहृष्टाः, वाग्मिनो, वन्दिनः, च, सूतमागधाः, अपि, मङ्गलैः, स्तुवन्तः, त्वाम्, अद्य, न, दृश्यन्ते ।

**सुधा**—हे नरर्षभ=हे नरश्रेष्ठ !, प्रहृष्टाः=प्रमुदिताः, वाग्मिनः=चतुराः, बन्दिनः=स्तुतिपाठकाः, "बन्दिनः स्तुतिपाठकाः" इत्यमर।:च=पुनः, सूतमागधाः, सूताः=सारथयः, ('सूतः क्षत्ता च सारथिः' इत्यमरः) मागधाः=मगधाः, ('स्युर्मागधास्तु मगधाः, इत्यमरः ) सूताश्च मागधाश्चेति ते तथोक्ता अपि, मङ्गलैः= शुभसूचकैर्जयशब्दादिभिः, स्तुवन्तः=प्रार्थयन्तः, त्वां=भवन्तम् ,अद्य=अधुना, न दृश्यन्ते=नावलोक्यन्ते, अत्राऽपि हेतुं वदेति भावः ।

**इन्दुमती**—( सीताजीने कहा—हे स्वामिन् ! आज आपका राज्याभिषेकका शुभ दिन है, परन्तु क्या कारण है कि— ) हे नरश्रेष्ठ ! आज स्तुति-पाठ करनेवाले वाग्मियों ( भट्टों ) को तथा सूत और मगधको भी प्रसन्न होकर मंगल-पाठसे आपकी स्तुति करते हुए नहीं देखते ।

**न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ।**
**मूर्ध्नि मूर्धाभिषिक्तस्य ददतिस्म विधानतः ॥ १३ ॥**

**अन्वयः**—वेदपारगाः, ब्राह्मणाः, मूर्धाभिषिक्तस्य, ते, मूर्ध्नि, क्षौद्रं, च, दधि, च, विधानतः, न, ददतिस्म ।

**सुधा**—वेदपारगाः=वेदपारङ्गताः, ब्राह्मणाः=प्रशस्तविप्राः, मूर्धाऽभिषिक्तस्य= कृतसशिरःस्नानस्य, ते=तव, मूर्ध्नि=शिरसि, क्षौद्रं=मधु, "मधु क्षौद्रं माक्षिकादि" इत्यमरः । च=पुनः दधि=पयस्यञ्च "पयस्यमाज्यदध्यादि" इत्यमरः । विधानतः=शास्त्रोक्तक्रमेण, न ददतिस्म=नाऽभिषिञ्चन्तिस्मेत्यर्थः, अत्र किं कारणन्तद्वदेत्यभिप्रायः ।

**इन्दुमती**—( सीताजीने पुनः कहा—हे आर्यपुत्र ! क्या कारण है कि ) राज्याभिषिक्त आपके मस्तकपर वेदपारङ्गत ( चतुर्वेदी ) ब्राह्मणोंने शास्त्रोक्त विधिसे मधु और दही क्यों नहीं दिया ( लगाया ) ।

**न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः ।**
**अनुव्रजितुमिच्छन्तिपौरजानपदास्तथा॥ १४ ॥**

**अन्वयः**—( हे स्वामिन् ! ) सर्वाः, प्रकृतयः, भूषिताः, श्रेणीमुख्याः च, तथा, पौरजानपदाः, त्वाम्, अनुव्रजितुं, न, इच्छन्ति।

**सुधा**—(हे स्वामिन् !) सर्वाः=निखिलाः, प्रकृतयः=अमात्यादयः, भूषिताः=अलङ्कृताः, श्रेणीमुख्याश्च = परिषन्मुख्याश्च, ( वीथीप्रधाना इति केचित्, ) तथा, पौरजानपदाः=नागरिकलोकाः, त्वां = भवन्तम्, अनुव्रजितुम् = अनुगन्तुं, न इच्छन्ति=नाऽभिलषन्ति, तत्कुत इति वदेति भावः।

**इन्दुमती**—( सीताजी जब रामागमनकी प्रतीक्षा कर रही थी, तब अकेले रामचन्द्रजी राज-मार्गसे महलकी तरफ आरहे थे। इसलिये सीताजीने पूछा—) हे नाथ ! ( आज तो महोत्सव का दिन है फिर ) अमात्य-मण्डल, राज-दरबारके सदस्य, शहरनिवासी तथा राज्यके प्रजालोग सज-धजकर क्यों आपके पीछे चलना नहीं चाहते।

**चतुर्भिर्वेगसम्पन्नैर्हयैः काञ्चनभूषणैः।**
**मुख्यः पुष्परथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥**

**अन्वयः**—काञ्चनभूषणैः, वेगसंपन्नैः, चतुर्भिः, हयैः, युक्तः, मुख्यः पुष्परथः, ते, अग्रतः, किं, न, गच्छति ?।

**सुधा**—काञ्चनभूषणैः=स्वर्णालङ्कारैः, वेगसम्पन्नैः = अतिवेगविशिष्टैः, चतुर्भिः = चतुःसख्याकैः, हयैः = अश्वैः, युक्तः सहितः मुख्यः=श्रेष्ठः, पुष्परथः=प्रचुरपुष्पालङ्कृतरथविशेषः, उत्सवाय कल्पितो रथ इत्यर्थः, ते = तव, अग्रतः = संमुखात्, किं = कथं, न गच्छति = न चलति, ( तदपि वद )।

**इन्दुमती**—( राज्याभिषेकके अवसरपर जलूसको निकलते नही देखकर सीताजीने कहा— ) हे आर्यपुत्र ! आज बड़े तेजीसे चलने वाले और सोनेके आभूषणों से सुसज्जित चार घोड़ोंसे युक्त श्रेष्ठ उत्सव-रथ आपके आगे क्यों नहीं चलता।

**न हस्ती चाग्रतः श्रीमान्सर्वलक्षणपूजितः।**
**प्रयाणे लक्ष्यते वीर ! कृष्णमेघगिरिप्रभः ॥ १६ ॥**

**अन्वयः**—हे वीर ! सर्वलक्षणपूजितः, श्रीमान्, कृष्णमेघगिरिप्रभः, हस्ती, च, अग्रतः, प्रयाणे ( तव) न, लक्ष्यते।

**सुधा**—हे वीर=क्षत्रियकुमार ! सर्वलक्षणपूजितः=सर्वाणि—समग्राणि, यानि लक्षणानि प्रशस्तगजचिह्नानि, तैः, पूजितः-सम्पन्नः, श्रीमान्=सर्वसम्प्र-

त्तिहेतुः, कृष्णमेघगिरिप्रभः = कृष्णः-श्यामवर्णो यो मेघः-घनः, तद्युक्तो यो गिरिः=पर्वतः, तस्य प्रभेव प्रभा-सादृश्य, यस्य सस्तथोक्तः। केचित्तु--कृष्ण· मेघप्रभः गिरिप्रभश्चेत्युभयसादृश्यमाहुस्तन्न, उभयोरुपमानत्वे वैषम्यापत्तेः। एवं गुणविशिष्टो हस्ती च=गजोऽपि, अग्रतः = सम्मुखात्, प्रयाणे = गमने, ( तव ) न लक्ष्यते = न दृश्यते तत्कस्य हेतोरिति भावः।

**इन्दुमती**—( सीताजीने पुनः जलूसके वारेमें कहा-- ) हे नाथ ! प्रशस्त गज-चिन्होंसे युक्त काले बादलके समान रङ्गवाला तथा पर्वतके समान विशाल हाथी आपके प्रयाण ( उत्सव-जलूस ) के आगे क्यों नहीं चलता।

**न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन !।**
**भद्रासनं पुरस्कृत्य यातं वीरपुरस्सरम् ॥ १७ ॥**

**अन्वयः**—हे प्रियदर्शन ! काञ्चनचित्रं, भद्रासनं, पुरस्कृत्य, वीरपुरस्सरं, ते, यातं, न च, पश्यामि।

**सुधा**—हे प्रियदर्शन = प्रियं-मधुरं, दर्शनम्-अवलोकनं, यस्य, तत्सम्बुद्धौ। काञ्चनचित्रं = स्वर्णमयचित्रविशिष्टं, भद्रासनं = मङ्गलहेतुभूतासनविशेषं, पुरस्कृत्य = हस्ताग्रे धृत्वा, वीरपुरस्सरं = वीरपुरस्कृतं, ते = तव, यातं = गमनं, न च पश्यामि = नचावलोकयामि, तत्रापि को हेतुरित्याशयः।

**इन्दुमती**—( सीताजीने कहा- ) हे प्रियदर्शन प्रभो ! सोनेका बना हुआ सुन्दर प्रशंसित भद्रासन जिसे लेकर नौकर आगे २ चलता था, आज वह क्यों नहीं लेकर चलता ॥

**अभिषेको यदा सज्जः किमिदानीमिदं तव।**
**अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥**

**अन्वयः**—यदा, तव, अभिषेकः, सज्जः, इदानीम्, मुखवर्णः, च, अपूर्वः, ( दृश्यते ) प्रहर्षः, च, न, लक्ष्यते, इदं, किम् ?

**सुधा**—यदा=यस्मिन् काले, तव=भवतः, अभिषेकः=स्नानं सज्जः=सन्नद्धम्, इदानीं=तस्मिन्नेवैतस्मिन् वर्त्तमानकाले, मुखवर्णश्च=वदनरागश्च, अपूर्वः = कदाप्यननुभूतः, ( दृश्यते ) प्रहर्षः = युवराजपदप्राप्तिजन्यानन्दश्च, न लक्ष्यते = न दृश्यते, इदं = यथावत्प्रसङ्गाप्रापणं, किं = किमर्थमित्यर्थः। इत्यपि त्वरितमेव कारणं वदेति भावः।

**इन्दुमती**—( अन्तमें सीताजीने कहा- ) हे आर्यपुत्र ! जब कि राज्या·

भिषेक की सभी तैयारियां हो चुकी है तब (आपको प्रसन्न रहना चाहिये किन्तु) आपके चेहरेका रङ्ग ऐसा अभूतपूर्व फीका क्यों दिखलाई पड़रहा है। युवराजपद-प्राप्ति जन्य आनन्द की रेखतक दिखलाई नहीं पड़नेका क्या कारण है॥

**इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः।**
**सीते! तत्रभवांस्तातः प्रव्राजयति मां वनम्॥ १९॥**

**अन्वयः**—इतीव, विलपन्तीं, तां, रघुनन्दनः, प्रोवाच, हे सीते! तत्रभवान्, तातः, मां, वनं, प्रव्राजयति,

**सुधा**—सीतावचः उपसंहरन् प्रश्नोत्तरं दिदापयिषुः रामक्रियां वर्णयति-**इतीवेति**। इतीव = अनेन प्रकारेण, विलपन्तीं = दुःखेन भाषमाणां, विविधं पृच्छन्तीं वा, तां = सीतां, रघुनन्दनः = श्रीरामः, प्रोवाच = प्रोक्तवान्, तद्वचनमेव प्रतिपादयति—हेसीते = जनकनन्दिनि! तत्रभवान् = पूज्यः, "तत्रभवानत्रभवानितिशब्दो वृद्धैः प्रयुज्यते पूज्ये" इति हलायुधः। तातः = पिता, मां = रामं, वनं = दण्डकारण्यं, प्रव्राजयति = गन्तुं प्रेरयति।

**इन्दुमती**—इसप्रकार सीताजीके दुःख भरे वचनोंको सुनकर रामचन्द्रजीने कहा-हे सीते! पूज्य पिताजी ने (तो) मुझे वनजानेकी आज्ञा दी है॥

**कुले महति सम्भूते! धर्मज्ञे! धर्मचारिणि!।**
**शृणु जानकि! येनेदं क्रमेणाद्यागतं मम॥ २०॥**

**अन्वयः**—हे महति कुले सम्भूते! हे धर्मज्ञे! हे धर्मचारिणि! हे जानकि! येन, क्रमेण, इदम्, अद्य, मम, आगतं (तत्) शृणु।

**सुधा**—उत्कटाऽप्रियाऽऽकर्णनेन प्रियाया अत्यन्तमोहो मा भूदिति भयात् चित्तदार्ढ्यार्थं विविधगुणकीर्त्तनेन सम्बोधयति-**कुल** इत्यादि। महति = प्रशस्ते, **कुले**=वंशे, सम्भूते=समुत्पन्ने हे प्रशस्तकुललब्धजन्मे! इत्यर्थः। धर्मज्ञे=धर्मं जानाति या सा धर्मज्ञा तत्सम्बुद्धौ। धर्मचारिणि=धर्मं चरति-अनुतिष्ठति, या सा धर्मचारिणी तत्सम्बुद्धौ। हे जानकि = जनकसुते! येन क्रमेण = हेतुना, इदं = प्रव्राजनम्, अद्य=अस्मिन्नहनि मम=रामस्य, आगतं=प्राप्तम्, उपस्थितमित्यर्थः। (तत्) शृणु=आकर्णय।

**इन्दुमती**—(रामचन्द्रजी ने कहा-) हे प्रशस्त (राजर्षि) कुलमें उत्पन्न, धर्म जाननेवाली तथा धर्माचरण करनेवाली जनकनन्दिनि! सुनो, जिस कारणसे मुझे वनवासकी आज्ञा मिली है, उसे कहता हूँ॥

राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै ।
कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥

**अन्वयः**—सत्यप्रतिज्ञेन, राज्ञा, दशरथेन, मम, पित्रा, पुरा, कैकेय्यै, मात्रे, तु, वै, महावरौ दत्तौ ।

**सुधा**—सत्यप्रतिज्ञेन = सत्यप्रतिश्रुतेन, राज्ञा = नरपतिना, दशरथेन = तन्नामप्रसिद्धेन, मम पित्रा = मज्जनकेन, पुरा=देवासुरसङ्ग्रामकाले, कैकेय्यै=एतन्नाम्न्यै कनीयस्यै, मात्रे=जनन्यै, तु, वै = निश्चयेन, (१) महावरौ = वरद्वयमित्यर्थः, दत्तौ = अर्पितौ, अत्र वरे महत्त्वं त्वनिवार्यत्वमेवेति बोध्यम् ।

**इन्दुमती**—( रामचन्द्रजीने कहा हे सीते ! मेरे वनवासका कारण सुनो- ) सत्यप्रतिज्ञ मेरे पिता महाराज दशरथने मेरी माता कैकेयी को पहले दो वर दिये थे ॥

तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते ।
प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥

**अन्वयः**—नृपोद्यते, मम, अस्मिन्, अभिषेके, सज्जे, ( सति ) तया, अद्य, स समयः, प्रचोदितः ( तेन राजा ) धर्मेण, प्रतिनिर्जितः ।

**सुधा**—नृपोद्यते=नृपेण-राज्ञा दशरथेन उद्यते-प्रस्ताविते, मम=रामस्य, अस्मिन् = प्रस्तुते, अभिषेके = यौवराज्याभिषेचने, सज्जे=प्रसक्ते ( सति ) तया= लब्धवरया कैकेय्या, अद्य = इदानीं, स, समयः = "त्वद्याचितं दास्यामी" ति कृतशपथ इत्यर्थः "समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः, । प्रचोदितः="पूर्वदत्तं वरद्वयं देही" तिप्रकर्षेण प्रेरितः "आसीत्" (तेन राजा) धर्मेण= धर्ममार्गेण, प्रतिनिर्जितः = स्वायत्तीकृतः ।

**इन्दुमती**—(रामचन्द्रजीने कहा-) हे सीते ! आज महाराजको मेरा राज्याभिषेक करनेमें उद्यत देख, कैकेयीने समय पाकर धर्मसे (शपथद्वारा अथवा नट-खटवाजीसे ) महाराजको वशमें कर लिया और वचन वद्ध ( जो मांगोगी दूंगा )

---

( १ ) अत्र परम्परया चेदं श्रूयते—पुरा किल देवासुरसङ्ग्रामे देवपक्षमाश्रित्य 'राजा दशरथो युध्यमान आसीत् । तत्राऽसुरा देवाजेतं दशरथस्योपरि स्वमायां वितेनुः । तथाविधं तमवलोक्य कैकेयी स्वयमेव दानवैः सह युद्ध्वातन्मायां विनाश्य स्वपतिं रक्षितवती । ततः प्रसन्नो दशरथस्तस्यै वरद्वयं दत्तवान् । तत्र कैकेयी प्राह—नाथ ! सम्प्रति वरद्वयेन प्रार्थनीयं न किञ्चिदपि, अतो न्यासभूतमेव तिष्ठतु, स आह तथैवास्त्विति ।

महाराजको अपनी थातीका दोनों वरदान ( भरतको राज्याभिषेक और मुझ ( राम ) को चौदह वर्षका वनवास ) देनेको कहा ॥

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चाऽपि यौवराज्ये नियोजितः ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ॥ २३ ॥

**अन्वयः**—मया, हि, चतुर्दश, वर्षाणि, दण्डके, वस्तव्यम् ,(इति) मे, पित्रा, नियोजितः, भरतः, च, अपि, यौवराज्ये, नियोजितः। (मया चाऽपि स नियोजितः) विजनं, वनं, प्रस्थितः, सः, अहं, त्वां, द्रष्टुम् , आगतः, ( अस्मि )

**सुधा**—मया=रामेण, हि, चतुर्दश, वर्षाणि=चतुरधिकदशहायनानि, दण्डके=दण्डकारण्ये, वस्तव्यं=निवसितव्यम् ( इति ) मे=मह्यं, पित्रा=जनकेन, नियोजितः=नियुक्तीकृतः, भरतः=कैकेयीसुतश्चाऽपि, यौवराज्ये=युवराजपदे नियोजितः, ( मया चाऽपि स नियोजितः ) ज्येष्ठाज्ञां विना तस्य तत्प्राप्त्यसम्भवादिति भावः। विजनं=जनरहितं, विशिष्टजनसहितं वा वनं=महारण्यं प्रस्थितः, सः=पित्राज्ञप्तः, अहं=रामः, त्वां=भवतीं, द्रष्टुम्=अवलोकयितुं तत्त्वतस्तु-उपदेष्टुमित्यर्थः । आगतः=प्राप्तः, अस्मीति शेषः ।

**इन्दुमती**—( रामचन्द्रजीने कहा हे सीते ! कैकेयीका इस तरहके वरदान मांगने पर—) सत्यप्रतिज्ञ पिताजीने ( उन दोनों वरोंके अनुसार ) मुझको चौदह वर्ष तक दण्डकारण्यमें रहना चाहिये ऐसी योजनाकी है और भरतको युवराज पदपर नियोजित किया है। इसलिये हे सीते ! पिताकी आज्ञा पाकर मैं निर्जन वनमें जानेके लिये प्रस्तुत होकर तुम्हे देखनेके लिये ( तथा उपदेश देनेके लिये ) यहां आया हूँ ।

भरतस्य समीपे तु नाऽहं कथ्यः कदाचन ॥ २४ ॥

**अन्वयः**—तु, भरतस्य, समीपे, कदाचन, अहं न, कथ्यः ।

**सुधा**—अथ सीताया गृहेऽवस्थितौ भरतादिना सुखप्राप्त्यर्थं तज्जनकबुद्धिरुपदिश्यते-भरतस्येति । यद्वा-सीताहृदयमागन्तुं बुद्ध्युपदेशद्वारा प्रसन्नकोऽस्त्वादयति—भरतस्येति । तु=किन्तु (हे सीते ! यदा स्वप्रणामनिधानाय सविधे भरतः आगमिष्यति तदा) भरतस्य=कैकेयीसुतस्य ममानुजस्य, समीपे=सविधे, कदाचन=कथमपि, (त्वया) अहं, न कथ्यः=न श्लाघनीयः, मद्गुणवर्णनं न कर्त्तव्यमित्यर्थः । तदा हि मद्वियोगजनितदुःखेनातिदुःखितो भरतो नूनं न वर्त्तिष्ये-

ष्यतीति भावः। अथवा प्राप्तैश्वर्यत्वाद्गर्वितः परगुणकीर्त्तनं न सहिष्यत इत्यतो मद्गुणकीर्त्तनं न विधेयमित्याशयः।

**इन्दुमती**—( रामचन्द्रजीने कहा—हे प्रिये! देखना कभी भी अब राजा भरतके सामने मेरी प्रशंसा मत करना ( क्यों कि— )।

**ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम्।**
**तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम॥ २५॥**

**अन्वयः**—हि, ऋद्धियुक्ताः, पुरुषाः, परस्तवं, न सहन्ते, तस्मात्, ते, मम, गुणाः, भरतस्य, अग्रतः, न, कथ्याः।

**सुधा**—मद्गुणकीर्त्तनं तत्सविधे कथं न कर्त्तव्यमित्यत्र हेतुमाह—**ऋद्धियुक्ता** इति। हि=यतः, ऋद्धियुक्ताः=प्राप्तैश्वर्याः, पुरुषाः=नराः, परस्तवं=स्वातिरिक्तजनस्तुतिं, न सहन्ते=सोढुं समर्था न भवन्ति, एवं महतां स्वभाव एव येन प्रतिपक्षिण उत्कर्षं न सहन्त इत्याशयः। तस्मात्=हेतोः, ते=प्रसिद्धाः, मम, गुणाः=प्रियंवदत्वादयः, भरतस्य=कैकेयीसुतस्य, अग्रतः संमुखे, न कथ्याः=न श्लाघनीयाः, न वर्णनीया इत्यर्थः।

**इन्दुमती**—हे प्रिये! ऐश्वर्यवान् पुरुष दूसरोंकी स्तुति-प्रशंसा सह्य नहीं करते ( क्यों?—"प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया" ) इसलिये हे प्रिये अब तू राजा भरतके सामने मेरा गुणानुवाद मत करना ( अर्थात् भरतको अब देवर समझकर छोटा मत मानना प्रत्युत चक्रवर्ती राजा समझकर तद्योग्य उसका सत्कार करना )।

**नापि त्वं तेन भर्त्तव्या विशेषेण कदाचन।**
**अनुकूलतया शक्यं समीपे तस्य वर्त्तितुम्॥ २६॥**

**अन्वयः**—तेन, त्वं, कदाचन, अपि, विशेषेण, न, भर्त्तव्या, ( तथा ) तस्य, समीपे, अनुकूलतया, वर्त्तितुं, शक्यम्।

**सुधा**—तेन=पूर्वोक्तेन हेतुना, त्वं=भवती, कदाचन=कस्मिन्नपि समये, विशेषेण=सर्वविशिष्टत्वेन रूपेण, न, भर्त्तव्या=न भरणीया, बन्धुसाधारण्येन भरणीया इत्यर्थः। अशनादिभरणं लक्ष्मणशत्रुघ्नपत्नीभ्यां विशेषेण नाभिलषणीयमिति भावः। ( तथा ) तस्य=भरतस्य, समीपे=निकटे, अनुकूलतया=अप्रतिकूलतया, वर्त्तितुं=स्थातुं, शक्यं=योग्यं त्वयेति शेषः।

**इन्दुमती**—(रामचन्द्रजीने कहा—हे सीते!) अगर तू कहनेके मुताबिक

नहीं रहेगी तो भरत विशेष रूपसे (बड़ी भाभी या बहूरानी समझकर) तेरा भरण-पोषण नहीं करेंगे। तस्मात् हे सीते! भरतके सामने तुमको अनुकूल होकर ही रहना चाहिये(१)( भरतके सामने प्रतिकूल वचन ( मेरी प्रशंसा ) मत बोलना।

**तस्मै दत्तं नृपतिना यौवराज्यं सनातनम्।**
**स प्रसाद्यस्त्वया सीते! नृपतिश्च विशेषतः ॥ २७ ॥**

**अन्वयः**—नृपतिना तस्मै, सनातनं, यौवराज्यं, दत्तम्, च ( अतः ) हे सीते! सः, नृपतिः, विशेषतः, त्वया, प्रसाद्यः।

**सुधा**—तदनुकूलाचरणे हेतुमुपपादयन्नाह—**तस्मै** इति। नृपतिना=राज्ञा दशरथेन, तस्मै = भरताय, सनातनं = पारम्पर्यक्रमादागतं, यौवराज्यं=युवराज-पदं, दत्तम् = अर्पितम्, च = यतः नृपतिः = राजा (अतः) हे सीते = जनकात्मजे!, विशेषतः=विशेषेण, सः=भरतः, त्वया=भवत्या, प्रसाद्यः=सत्करणीयः, चो हेतौ।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे सीते! अब इस राज्यको महारानी बनने की हैसियत तुममें नहीं रही क्यों कि— ) महाराजने ( रघुकुलके परंपरागत रूपसे ) भरतको युवराज पद दिया है ( कैकेयीके कहने से आवेशमें आकर गुड़िया सरकार नहीं बनायी है ) अतः हे सीते! अब तुम्हारे लिये वह राजा भरत विशेष खुश करने योग्य है (उसके सामने मेरी प्रशंसा मत करना)।

**अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन्।**
**वनमद्यैव यास्यामि स्थिरा भव मनस्विनि! ॥ २८ ॥**

**अन्वयः**—अहम्, अपि, गुरोः, तां प्रतिज्ञां, च, समनुपालयन्, अद्य, एव, वनं, यास्यामि ( अतः ) हे मनस्विनि! ( त्वं ) स्थिरा भव।

**सुधा**—अहमपि, गुरोः=पितुर्दशरथस्य, तां=पूर्वप्रतिश्रुतां, प्रतिज्ञां=कैकेयीं प्रति "तुभ्यं वरद्वयं दास्यामि" इत्यात्मिकां, समनुपालयन्=सम्यक्तया पालनं कुर्वन्, अद्यैव=अस्मिन्नहन्येव, वनं=दण्डकारण्यं, यास्यामि=गमिष्यामि ( अतः ) हे मनस्विनि=दृढमनस्के! ( त्वं ) स्थिरा भव=मद्वियोगहेतुकान-वस्थितिं न प्राप्नुहीत्यर्थः।

---

(१) **नोटः**—पाठक यह न समझें कि रामचन्द्रजी इन उक्तियोंसे भ्रातृ-स्नेहमें अविश्वास प्रकट कर रहे हैं। यह राज-नीति है। अथवा रामचन्द्रजी अपनी उद्देश्य-पूर्त्तिके लिये सीताजीको भी वनमें लेजानेका स्वांग रच रहे हैं।

**इन्दुमती**—( रामचन्द्रजीने कहा हेसीते ! भरत राजा करार दिया गया और ) मैं भी पिताकी आज्ञा-पालन करनेके लिये आज ही वन जा रहा हूँ । अतः हे मनस्विनी सीते ! तुम स्थिरचित्त होकर रहो ( घबड़ाओ मत ) ॥

**याते च मयि कल्याणि ! वनं मुनिनिषेवितम् ।**
**व्रतोपवासपरया भवितव्यं त्वयाऽनघे ! ॥ २६ ॥**

**अन्वयः**—हे कल्याणि ! मुनिनिषेवितं, वनं, मयि, याते, च ( सति ) हे अनघे ! व्रतोपवासपरया, त्वया, भवितव्यम् ।

**सुधा**—हे कल्याणि = मङ्गलस्वरूपे !, मुनिनिषेवितं = तपस्विजनसेवितं, वनं = दण्डकारण्यं, मयि = रामे, याते च = गते च, (सति) हे अनघे = निष्पापे !, व्रतम् = एकादश्यादि, उपवासश्च "उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥" इत्युक्तलक्षणः, तथा च व्रतोपवास-परया = व्रतोपवासतत्परया, त्वया = भवत्या, भवितव्यम् = भाव्यम् ।

**इन्दुमती**—( रामचन्द्रजीने पुनः कहा- ) हे अनघे ( पापरहिते ) कल्याणि सीते ! मुनिवेष धारण कर मेरे वन चले जानेके बाद तुम्हे व्रतोप-वास करना चाहिये ( विलासता को त्याग देना क्योंकि-"हास्यं परगृहे पानं त्यजेत् प्रोषितभर्तृका ) ॥

**कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।**
**वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥**

**अन्वयः**—हे सीते ! कल्यम्, उत्थाय, यथाविधि, देवानां, पूजां, कृत्वा, जनेश्वरः मम, पिता, दशरथः, ( त्वया ) वन्दितव्यः ।

**सुधा**—( हे सीते ! ) कल्यं = प्रातः काले "प्रत्यूषोऽहर्मुखं कल्यम्" इत्यमरः । उत्थाय = शय्यातोऽवतीर्य, यथाविधि = शास्त्रमनतिक्रम्य, देवानां = शिवादीनां, पूजाम् = अर्चनां, कृत्वा = सम्पाद्य, जनेश्वरः = नरेश्वरः, मम पिता = अस्मज्जनको दशरथः, ( त्वया ) वन्दितव्यः = प्रणम्यः ।

**इन्दुमती**—( रामचन्द्रजीने कहा-हे सीते ! ( मेरे वन चले जानेके बाद ) नित्य प्रातः सवेरे उठना और नित्यकर्म करके पहले अपने वंशपूज्य सूर्यादि देवताओंका यथाविधि पूजन करना । तत्पश्चात् मेरे पिता महाराज दशरथ जी को प्रणाम करना ॥

माता च मम कौशल्या वृद्धा सन्तापकर्शिता।
धर्ममेवाग्रतः कृत्वा त्वत्तः सम्मानमर्हति ॥ ३१ ॥

अन्वयः—सन्तापकर्शिता, वृद्धा, मम, कौशल्या, माता, च, धर्मम्, एव, अग्रतः कृत्वा, त्वत्तः, सम्मानम्, अर्हति।

सुधा—सन्तापकर्शिता=सन्तापेन-मद्वियोगजेन खेदेन, कर्शिता-अतिपीडिता, वृद्धा=ज्ञानवयोभ्यामधिका, मम, कौशल्या=कोशलदेशोत्पन्ना, माता-जननी, च, धर्मम् एव अग्रतः कृत्वा=धर्ममेव मुख्यं फलं बुद्धौ कृत्वेत्यर्थः। त्वत्तः=त्वत्सकाशात्, सम्मानं=सत्कृतिम्, अर्हति=प्राप्तुं शक्नोति। यद्वा=मय्यतिशय प्रेम्णा वनं गन्तुं प्रवृत्ताऽपि पतिशुश्रूषणरूपधर्ममेव अग्रतः कृत्वा वर्तमानेति मातुर्विशेषणमित्यवधेयम्।

इन्दुमती—( रामचन्द्रजीने कहा- ) हे सीते! मेरी माता कौशल्याजी एक तो वृद्धा हैं दूसरे मेरे वियोगसे अति पीड़ित हैं अत एव उनका सत्व करना भी तुम अपना धर्म समझना ॥

वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः।
स्नेहप्रणयसम्भोगैः समा हि मम मातरः ॥ ३२ ॥

अन्वयः—याः, शेषा, मम, मातरः, ( ताः सर्वा अपि ) ते, नित्यं, वन्दितव्याः, च, हि, मम, स्नेहप्रणयसम्भोगैः, मातरः, समाः,

सुधा—स्वमातुर्वन्दनादिकं विधायान्यासामपि तत्कर्त्तव्यमित्युपदिशति—वन्दितव्याश्चेति। याः शेषाः=कौशल्यातिरिक्ताः, मम मातरः=कैकेयीप्रभृतयो मम विमातरः, ( ताः सर्वा अपि ) ते=त्वया, नित्यं=प्रतिदिनं, वन्दितव्याः=प्रणम्याः, चकारात् सम्मानादिकमपि कर्त्तव्याः, हि=यतः, मम, स्नेहप्रणयसम्भोगैः=स्नेहः—अतिप्रीतिः, प्रणयः—अतिसौहार्दं, भोगः—पालनं तैः, समाः=तुल्याः, मयि स्नेहादित्रयमविशेषेण कुर्वन्ति अतस्ताः कौशल्यातुल्यतया प्रणम्या इति भावः।

इन्दुमती—(रामचन्द्रजीने कहा-) हे सीते! कौशल्याके अतिरिक्त (कैकेयी, सुमित्रा) जो मेरी मातायें हैं उनका भी नित्यसत्कार करना क्योंकि उन्होंने भी मेरी सम्भोग ( पालन-पोषण ) किया अत एव मुझमें उनकी प्रीति और सौहार्द वैसा ही है जैसा माता कौशल्याका ॥

**भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।**
**त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥**

**अन्वयः**—मम, प्राणैः, अपि, प्रियतरौ, भरतशत्रुघ्नौ, च, विशेषतः, भ्रातृपुत्रसमौ, त्वया, च, द्रष्टव्यौ ।

**सुधा**—मम, प्राणैः = प्राणेभ्योऽपि, प्रियतरौ=अत्यन्तप्रियौ, भरतशत्रुघ्नौ= तन्नामकानुजौ, च, विशेषतः = सर्वविशिष्टत्वेन रूपेण, भ्रातृपुत्रसमौ=भ्रात्रा पुत्रेण च तुल्यौ, त्वत्तो ज्येष्ठो भरतोऽतस्तं भ्रातृवत्, शत्रुघ्नश्च त्वत्तः कनिष्ठ इति तं पुत्रवदित्याशयः । त्वया = भवत्या च, द्रष्टव्यौ = अवलोकनीयौ ।

**इन्दुमती**—( रामचन्द्रजीने फिर कहा- ) हे सीते ! अपने प्राणोंसे भी बढ़कर प्रिय जो मेरे भाई भरत और शत्रुघ्नजी हैं उनको तुम भाई और पुत्रकी तरह समझना अर्थात् भरतजी तुमसे बड़े हैं अतः उनको भाईकी तरह और शत्रुघ्नजी छोटे हैं अतः उनको पुत्रवत् मानना ॥

**विप्रियं च न कर्त्तव्यं भरतस्य कदाचन ।**
**स हि राजा च वैदेहि ! देशस्य च कुलस्य च ॥ ३४ ॥**

**अन्वयः**—हे वैदेहि ! कदाचन, भरतस्य, विप्रियं, न च, कर्त्तव्यम् , हि, स, च, देशस्य, च, कुलस्य, च, राजा च ।

**सुधा**—हे वैदेहि = जनकात्मजे !, कदाचन = कस्मिन्नपि समये, भरतस्य, = ममानुजस्य, विप्रियं = विरुद्धं, न च कर्त्तव्यं = न च विधातव्यं, हि=यतः, स च = भरतः देशस्य = भारतवर्षस्य, च = पुनः, कुलस्य = रघुकुलस्य च, राजा च=पालकत्वेन राजसदृशः, च इवार्थेऽत्र ।

**इन्दुमती**—( अन्तमें रामचन्द्रजीने कहा- ) हे वैदेहि (१) सीते ! भरतका विरुद्ध आचरण कभी मत करना क्यों कि अब वे देशके और रघुकुलके भी राजा ( प्रभु ) हैं ॥

**आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।**
**राजानः सम्प्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५ ॥**

---

( १ ) यहाँ पर वैदेही कहने का तात्पर्य यह है कि तुम अपने पिता मिथिलेश महाराज जनकके भरोसे पर भी भरतका विरुद्ध आचरण ( मिथिला और अयोध्याको लड़ानेका षड्यन्त्र) मत करना क्योंकि तुम्हारे पिता विदेह ( राजर्षि ) हैं वे सत्य प्रतिज्ञ महाराज दशरथके विरुद्ध नहीं खड़े होंगे प्रत्युत उनके सत्य-पालनका समाचार सुनकर खुश होंगे ।

**अन्वयः**—राजानः, शीलेन, हि, आराधिता, प्रयत्नैश्च, उपसेविताः, संप्रसीदन्ति, विपर्यये, प्रकुप्यन्ति ।

**सुधा**—सम्प्रति सीतासमीपवर्तिजनानप्युपदिशन्नाह—**आराधिता** इति । राजानः = नृपतयः, शीलेन = तदनुकूलस्वस्वभावेन, हि, आराधिताः = स्वाभिलषितधर्मपालकत्वसिद्धिं प्राप्ताः, प्रयत्नैः = तदपेक्षितसाधकव्यापारैः, उपसेविताः = तद्व्यापारजनितानन्दं प्राप्ताः, सम्प्रसीदन्ति = सम्यक्तया प्रसन्ना भवन्ति, विपर्यये = शीलाद्यभावे, प्रकुप्यन्ति = क्रोधयुक्ता भवन्ति । तस्माद्राजप्रसन्नार्थं सुखार्थिभिरनुकूलाचरणेन भाव्यमित्याशयः ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! कुटिलताको त्यागकर विनम्र भावसे सेवा करने से तथा तत्साधक प्रयत्न पूर्वक उपसेवनसे ही राजालोग प्रसन्न होते हैं और इसकेविपरीत करनेसे वे क्रुद्ध होते हैं ( अतः राजा भरतके प्रतिकूल कार्य मत करना ॥

**औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।**
**समर्थान् सम्प्रगृह्णन्ति जनानपि नराधिपाः ॥ ३६ ॥**

**अन्वयः**—हि, नराधिपाः, अहितकारिणः, औरसान्, अपि, पुत्रान् त्यजन्ति, समर्थान्, जनान्, अपि, संप्रगृह्णन्ति ।

**सुधा**—अथ राजधर्ममुपदिशति-**औरसानिति** । हि = यतः, नराधिपाः = राजानः, अहितकारिणः = हितं—प्रियं, कुर्वन्ति ये ते हितकारिणस्ते न भवन्तीति तथोक्तान् राजविरुद्धाचरणानित्यर्थः । औरसान्-अपि "संस्कृतायां तु भार्यायां स्वयमुत्पादयेत्तु यम् । तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥" इत्युक्तलक्षणात्मजानपि, पुत्रान्=सुतान्, त्यजन्ति = मुञ्चन्ति, समर्थान् = अनुकूलकारिणः, जनान्=सम्बन्धलेशहीनानपि, सम्प्रगृह्णन्ति=स्वीकुर्वन्ति । तस्माद्राजविप्रियं कथमपि नानुष्ठेयमिति भावः ।

**इन्दुमती**—( रामचन्द्रजीने कहा – ) हे सीते ! राजा लोग अनिष्ट करने वाले औरस ( अपनी विवाहिता स्त्रीसे उत्पन्न ) पुत्रों को भी त्याग देते हैं और हित करनेवाले अन्य ( सम्बन्धीसे भिन्न ) लोगोंको ग्रहण करते हैं ( अतः राजा भरतका अहित तुम कभी मत करना ) ।

**सा त्वं वसेह कल्याणि ! राज्ञः समनुवर्त्तिनी ।**
**भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥**

**अन्वयः**—हे कल्याणि ! सत्यव्रतपरायणा, धर्मे, रता, भरतस्य, समनुवर्त्तिनी, सा, त्वम् , इह, राज्ञः, ( समीपे ) वस ।

**सुधा**—हे कल्याणिमङ्गलस्वरूपे ! सत्यव्रतपरायणा = अमोघव्रततत्परा, धर्मे = स्वाम्याज्ञापालने, रता=तत्परा भरतस्य = ममानुजस्य कैकेयीनन्दनस्य, समनुवर्त्तिनी=अनुकूला, सा, त्वम् , इह = अयोध्यायां राज्ञः=दशरथस्य (समीपे) वस=वासं कुरु ।

**इन्दुमती**—( रामचन्द्रजीने कहा-इसलिये— ) हे कल्याणि ! तुम राजा भरतकी आज्ञाके अनुकूल आचरण करती हुई सत्यव्रत परायणा होकर यहीं ( अयोध्या राजधानीमे ) रहो ।

**अहं गमिष्यामि महावनं प्रिये ! त्वया हि वस्तव्यमिहेव भामिनी ।**
**यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्यमिदं वचो मम ॥३८॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षड्विंशः सर्गः ।

---

**अन्वयः**—हे प्रिये ! अहं, महावनं, गमिष्यामि, (अतः) त्वया, हि, इह, एव, वस्तव्यं, भामिनी ( त्वं ) यथा, कस्यचित् , व्यलीकं, न, कुरुषे, तथा, इदं, मम, वचः, त्वया, (सदैव) कार्यम् ।

**सुधा**—ननु त्वद्विनाऽहमप्यत्र न स्थास्यामि किन्तु त्वया सहैव वनं गमिष्यामीत्यत आह—अहमिति । हे प्रिये=वल्लभे !, अहं, महावनं = दण्डकारण्यं, गमिष्यामि=व्रजिष्यामि, वने महत्वं त्वद्गमनायोग्यत्वेन । (अतः), त्वया=भवत्या, हि, इह एव = अयोध्यायामेव, वस्तव्यं = निवसितव्यम्। हेत्वन्तरमाह-यथेति । भामिनी = सौन्दर्यवती ( त्वं ) यथा = येन प्रकारेण, कस्यचित् = मत्पित्रादेः, व्यलीकम् = अप्रियं, न कुरुषे = न विदधासि, तथा = तेन प्रकारेण, इदं, मम, वचः=उक्तिः, त्वया=भवत्या ( सदैव ) कार्यं = कर्त्तव्यम् । यद्वा—यथा कस्यचिद्मद्वचसः व्यलीकम् = अनृतत्वं न कुरुषे तथेदमपि मे वचः, कार्यम्=अनुष्ठेयमित्यर्थः । एवञ्च त्वद्गमने मत्पित्रादीनामत्यन्तखेदो भविष्यतीति त्वद्गमनं नोचितमित्याशयः ।

इति श्रीवाल्मीकीयरामायणेऽयोध्याकाण्डे "सुधा" टीकायां षड्विंशः सर्गः ।

---

**इन्दुमती**--अन्तमें पुनः रामचन्द्रजीने कहा—हे प्राणवल्लभे सीते ! मैं महावन (दण्डकारण्य) जाता हूं । तुमको यहीं ( अयोध्यामें ) रहना चाहिये ।

हे भामिनि ! तुमको मेरी इस पूर्वोक्त शिक्षाको धारण करना चाहिये और किसीका अप्रिय नही करना चाहिये। ( तभी तुम मेरे परोक्षमें सुखसे यहां रह सकोगी )।

इस प्रकार इन्दुमतीटीकामे अयोध्याकाण्डका २६ वां सर्ग समाप्त हुआ।

---

## अथ सप्तविंशः सर्गः।

### पतिव्रता सीता

**एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी।**
**प्रणयादेव संक्रुद्धा भर्त्तारमिदमब्रवीत् ॥ १ ॥**

**अन्वयः**—प्रियार्हा, प्रियवादिनी, वैदेही, एवम्, उक्ता, तु, प्रणयात्, एव, संक्रुद्धा, भर्त्तारम्, इदम्, अब्रवीत्।

**सुधा**—एवं रामकर्त्तव्यं सामान्यधर्मानुष्ठानमुपपाद्य अथ सीतानुष्ठेयं पातिव्रत्यधर्ममुपपादयितुं समासेनोपक्षिपति-एवमित्यादि। प्रियार्हा = अप्रियवादि[न्] प्रियसंभाषणार्हा, प्रियवादिनी = मधुरभाषिणी, वैदेही = सीता, एवं="त्वया वस्तव्यमिहैव भामिनी" इत्यादिप्रकारेण, उक्ता = अप्रियमभिहिता, तु, प्रणया[त्] स्नेहादेव हेतोः, न तु वैरात्, संक्रुद्धा = कथं मम भिन्नवासमादिशतीत्यमर्षवती, भर्त्तारं = स्वामिनम्, इदं = वक्ष्यमाणवचनम्, अब्रवीत्=उक्तवती।

**इन्दुमती**—एवं (तुम अयोध्यामें भरतकी हितैषिणी बनकर रहो इत्यादि) रूपेण-प्रिय वचन बोलनेवाली अत एव सभीका प्रिय अपनी प्राणेश्वरी सीताजीसे जब रामचन्द्रजीने कहा; तब सीताजी ( ऊपरसे )-क्रोध प्रकट करती हुई नम्रतापूर्वक कहने लगी- ॥

**किमिदं भाषसे राम ! वाक्यं लघुतया ध्रुवम् !**
**त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ! ॥ २ ॥**

**अन्वयः**—हे नरवरोत्तम ! राम ! त्वया, लघुतया, ध्रुवं, यद्, वाक्यं, श्रुत्वा, मे, अपहास्यं, ( तद्वाक्यं त्वं ) भाषसे, इदं, किम्?।

**सुधा**—हे नरवरोत्तम = नरवरो नरश्रेष्ठस्तत्राऽप्युत्तमः श्रेष्ठः, तत्संबुद्धौ, त्वया = श्रीमता, भवतः सकाशादित्यर्थः। लघुतया=मयि क्षुद्रत्वालम्बनेन, ध्रुवं= निश्चितम् अत्यन्तनिःसारमित्यर्थः। यद्, वाक्यं=वचनं, श्रुत्वा=आकर्ण्य मे = मम स्त्रिया अपि, अपहास्यम् = अतिशयितो हासो भवति (तद्वाक्यं त्वं) भाषसे-

ब्रवीषि, इदं किम्=अयमपूर्वः प्रकार इतः पूर्वं न दृष्टचर इति महदाश्चर्यमित्यर्थः।

**इन्दुमती**—( सीताजीने कहा- ) हे आर्यपुत्र! राम! आप कैसी छोटी बातें करते हैं? हे महाराज कुमार! आपने जो कुछ कहा है वह सुनकर मुझको हंसी आरही है। ( नरश्रेष्ठ चक्रवर्ती महाराज दशरथके पुत्र होकर आपको ऐसी शिक्षा हमे नहीं देनी चाहिये ) ॥ २ ॥

**वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप!।**
**अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम्॥ ३॥**

**अन्वयः**—हे नृप! त्वया ( यत् ) इरितं ( तत् ) शस्त्रास्त्रविदुषां, वीराणां, राजपुत्राणाम्, अनर्हम्, अयशस्यं, च, (अतः) न, श्रोतव्यम्।

**सुधा**—हे नृप=राजन्!, त्वया=श्रीमता, (यत्) ईरितं=कथितं (तत्) शस्त्रा-विदुषां=शस्त्राणि-लोहनिर्मितछुरिकारिदीनि, अस्त्राणि आयुधानि, विदन्ति ये ते तथोक्तास्तेषां तथोक्तानाम्, "शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति" "आयुधं तु प्रहरणं शस्त्रमस्त्रम्" इत्यमरः। वीराणां=क्षात्रतेजःसंपन्नानां, इति राजपुत्राणां=क्षत्रियकुमाराणाम्, अनर्हम्=अयोग्यम्, अयशस्यं च=अकीर्त्तिकरञ्च यशोनिवर्त्तकमितितात्पर्यम्। न श्रोतव्यं=श्रोतुमयोग्यमित्यर्थः, मयेति शेषः।

**इन्दुमती**—( सीताजीने व्यंगभरे शब्दोंमें पुनः कहा- ) हे राजन्! आपने जो ( मुझे भरतकी खुशामद सीखनेको ) कहा है वह शस्त्रास्त्र विद्याओंमें निपुण ( आपके ऐसे ) वीर क्षत्रिय योद्धाओंके लिये अयोग्य है ( बोलने योग्य नहीं है ) और अकीर्तिकर ( कलंकास्पद ) है ( आपने यथा योग्य बातें नहीं कहीं )। इसलिये मेरे ( राज कन्या तथा वीरपत्नी सीताके ) लिये भी सुनने ( मानने ) योग्य नहीं है ॥

**आर्यपुत्र! पिता माता भ्राता पुत्रस्तथा स्नुषा।**
**स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते॥ ४॥**

**अन्वयः**—हे आर्यपुत्र! पिता, माता, भ्राता, पुत्रः, तथा, स्नुषा, स्वानि, पुण्यानि, भुञ्जानाः, स्वं, स्वं, भाग्यम्, उपासते।

**सुधा**—मम वाक्यस्य कथं परिहासास्पदत्वमित्यत आह—आर्यपुत्रेति। हे आर्यपुत्र=महाकुलप्रसूत! पिता=जनकः, माता=जननी, भ्राता=सोदर्यादिः, पुत्रः=आत्मजः, तथा, स्नुषा=वधूः, "समाः स्नुषा जनीवध्वः" इत्यमरः। स्वानि=निजानि, पुण्यानि=सुकृतानि, एतचोपलक्षणमधर्मस्याऽपि तथाच पुण्या-

नीत्यस्य कर्मफलानीत्यर्थः, भुञ्जानाः=अनुभवन्तः सन्तः, स्वं स्वं=स्वस्यैव फलप्रदं, भाग्यं=शुभाशुभं कर्म, उपासते=उपजीवन्ति, न पुत्रादिकृतं तत्र तेषां सहाधिकाराभावात्। "भाग्यं कर्म शुभाशुभम्" इत्यमरः।

इन्दुमती—( सीताजीने पुनः कहा—हे आर्यपुत्र ! आपने अयोध्यामें मुझे रहनेको भी समुचित नहीं कहा है। अगर आपको वनजाने के लिये महाराजकी आज्ञा मिली है तो मुझे भी उनकी आज्ञा पालन करना चाहिये। क्योंकि— ) हे आर्यपुत्र ! पिता, माता, भाई, पुत्र और पुत्र-वधू ये सब अपने अपने कर्मफलको भोगते हुए अपने भाग्यके भरोसे रहते हैं।

**भर्त्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ !।**
**अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥**

**अन्वयः**—हे पुरुषर्षभ !, एका, नारी, तु, भर्त्तुः, भाग्यं, प्राप्नोति, अतः, अहम्, अपि, वने, वस्तव्यम्, इति, आदिष्टा, एव,

**सुधा**—पित्रादयः पूर्वोक्ताः सर्वेऽपि स्वकीयकर्मफलान्यनुभवन्ति, भर्त्तुरर्धशरीरभूता स्त्री तु भर्त्तृकृतभाग्यफलमेवानुभवतीति दर्शयति-**भर्त्तुरिति**। हे पुरुषर्षभ=पुरुषश्रेष्ठ ! एका=केवलं, नारी=भार्या, तु, भर्त्तुः भाग्यं=भर्त्रनुष्ठितं शुभाशुभं कर्मफलं, प्राप्नोति=लभते, ( दम्पत्योः सहाधिकारात् ) अतः= भर्त्तृकृतकर्मफलभोक्त्रीत्वाद्धेतोः, अहमपि, वने=दण्डकारण्ये, वस्तव्यं=निवसितव्यम्, इति, आदिष्टा=आज्ञप्ता, एव, तथाच तव वनवासादेशेनैव स्वपितृभ्यां सर्वकर्मणि सहाधिकारान्ममाप्यादेशः सिद्ध एवेति भावः। एवञ्च पित्राद्याज्ञापनमन्तरा इमां कथं सह नेष्यामीति संकोचो भवता न विधेय इत्याशयः।

**इन्दुमती**—हे पुरुषश्रेष्ठ ( मर्यादापुरुषोत्तम ) ! केवल अर्धाङ्गिनी (स्त्री) ही ऐसी होती है जो अपने पतिके भाग्यका फल भोगती है। अतः ( आपको आज्ञा मिलनेसे ) मुझे भी महाराजकी आज्ञा वन जानेकी मिल चुकी।

**न पिता नात्मजो नात्मा न माता न सखीजनः।**
**इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ६ ॥**

**अन्वयः**—नारीणाम्, इह, प्रेत्य, च, पिता, न, गतिः, आत्मजः न, (गतिः) ( तथा ) आत्मा न, (गतिः) माता चाऽपि न, ( गतिः ) सखीजनः, न, (गतिः), (किन्तु) सदा, एकः, पतिः (एव) गतिः।

**सुधा**—एवं स्वगमने भर्त्तृसमानभाग्यत्वं हेतुरित्युपपाद्य, तदेकगति

त्त्वमपि स्वगमने हेतुरित्युपपादयति—**नेति**। नारीणां=स्त्रीणाम्, इह=अस्मिँल्लोके, प्रेत्य=परलोके च, पिता=जन्मदाता, न गतिः=नाश्रयः, आत्मजः=तनयोऽपि, न (गतिः) (तथा) आत्मा=स्वकीयमात्रयत्नः, न (गतिः) माता=जननी (चाऽपि) न (गतिः) (तथा) सखीजनः=सहचरीजनश्च, न (गतिः) (किन्तु) सदा=सर्वस्मिन् काले, एकः=मुख्यः, पतिः=भर्त्ता (एव) गतिः=आधारः। "एको गति" रित्यत्र सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गत्वेन पुंस्त्वम्। तथा च भवता सह ममाऽपि गमनं समुचितमेवेति भावः।

**इन्दुमती**—(सीताजीने कहा—) हे आर्यपुत्र! स्त्रीके लिये इस लोकमें क्या? मरनेके बाद परलोकमें भी पतिको छोड़कर पिता, पुत्र, भाई-बन्धु, माता और सखीजन कोई भी काम नहीं आता। केवल पति ही उसका आश्रय स्थान है (अतः आपके साथ मेरा बनजाना अनुचित नहीं होगा)।

**यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव।**
**अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्॥ ७॥**

**अन्वयः**—हे राघव! यदि, त्वम्, अद्यैव, दुर्गं, वनं, प्रस्थितः (तदा) ते, अग्रतः, कुशकण्टकान्, मृद्नन्ती, (अहमपि) गमिष्यामि।

**सुधा**—फलितार्थमाह-**यदीति**। हे राघव=राम! यदि=चेत्, त्वं=भवान्, अद्यैव=अस्मिन्नहन्येव, दुर्गं=गहनं, वनं=दण्डकारण्यं प्रस्थितः=गन्तुं निर्गतः, (तदा) ते=तव, अग्रतः=सम्मुखात्, कुशकण्टकान्=कुशाः=दर्भाः, कण्टकाः-क्षुद्रशत्रवः, कुशाश्च कण्टकाश्चेति कुशकण्टकास्तान् तथोक्तान्। मृद्नन्ती=पद्भ्यां मर्दयन्ती मृदूकुर्वन्तीत्यर्थः, (अहमपि) गमिष्यामि=व्रजिष्यामि। तथा च तवाग्रतो मम गमने कुशकण्टकादिना तव क्लेशो न भविष्यतीति भावः, एतेन गमने स्वविलम्बाभावो व्यञ्जितः।

**इन्दुमती**—(सीताजीने कहा-हे आर्यपुत्र! वनमें आपको मैं कष्ट नहीं दूंगी, प्रत्युत सुख पहुंचाऊंगी) हे राघव! यदि आजही आप उस दुर्गम दण्डकारण्य वनको जा रहे हों तो (चलिये) मैं आपके आगे आगे उस महावनके कुश-कण्टकाकीर्ण मार्गको साफ करती हुई चलूंगी॥

**ईर्ष्यां रोषं वहिष्कृत्य भुक्तशेषमिवोदकम्।**
**नय मां वीर! विश्रब्धः पापं मयि न विद्यते॥ ८॥**

**अन्वयः**—हे वीर! ईर्ष्यां, रोषं, भुक्तशेषम्, उदकम्, इव, वहिष्कृत्य,

विश्रब्धः ( सन् ) मां, नय, ( यतः ) पापं, मयि, न, विद्यते ।

**सुधा**—हे वीर=क्षात्रतेजःसम्पन्न ! ईर्ष्यां=स्त्रिया वनगमनसाहसं कथमित्यक्षान्तिरीर्ष्या ताम् । रोषम्="अत्रैव सुखमास्वे" ति मयोक्तापि स्वयमनुगमिष्यामीति ब्रवीतीति रोषः तं । भुक्तशेषं=शास्त्रनिषिद्धतयोक्तमुच्छिष्टम्, उदकं=जलमिव, बहिष्कृत्य=त्यक्त्वा निःशेषं निरस्येत्यर्थः, विश्रब्धः=विश्वस्तः निःशङ्कः सन् इत्यर्थः, माम्=आत्मपत्नीं, नय=वनं प्रापयेत्यर्थः, (यतः) पापं=त्यागप्रयोजकं दुष्कृतं, मयि=तव भार्यायां, न विद्यते=नास्ति । वीरेति सम्बोधनेनैनामेकाकी कान्तारं कथं नयेयमिति सन्देहो न कर्त्तव्य इति सूचितम् । **यद्वा**—ईर्ष्यां रोषञ्च बहिष्कृत्य विश्रब्धो मां नय । ननु भुक्तभोगया त्वया वने किं प्रयोजनमित्यत आह—**भुक्तशेष**मिति । तथाच यथा दुष्प्रापपानीयवनगन्त्रा पीतशेषं कमण्डलुगतमुदकमवश्यं नेतव्यमेव, तथाऽहमपि त्वया नेतव्यैवेत्याशयः ।

**इन्दुमती**—सीताजीने पुनः कहा-हे नाथ ! उच्छिष्ट जलकी तरह ( जैसे मरुस्थलमें सफर करने वाला पथिक अपने पात्रस्थ जलका पान करनेपर उसे उच्छिष्ट समझकर फेंक नहीं देता, प्रत्युत सावधानीसे अपने साथमें रखकर चलता है; उसी तरह ) ईर्ष्या और रोषको त्यागकर निःशङ्क होकर हमको अपने साथमे लेते चलिये । हे वीर ! हममें कोई ऐसा पाप नहीं है ( जो मुझे वन नहीं लेजानेका कारण हो ) ॥

**प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।**
**सर्वावस्थागता भर्त्तुः पादच्छाया विशिष्यते ॥ ९ ॥**

**अन्वयः**—प्रासादाग्रैः, वा, विमानैः, वा, वैहायसगतेन, सर्वावस्थागता, भर्त्तुः, पादच्छाया, विशिष्यते ।

**सुधा**—अत्र प्रासादवासं परित्यज्य किमर्थं वनमासमभिलषसीत्यत आह—**प्रासादाग्रै**रिति । सर्वत्र पञ्चम्यर्थे तृतीया । तथा च प्रासादाग्रैः=सार्वभौमवासोत्तमप्रासादस्थितिभ्यः, वा=अथवा, विमानैः=स्वर्लोकादिस्थितविमानेभ्यः, वा वैहायसगतेन=अणिमाद्यष्टैश्वर्यसिद्धिसम्पन्नोचिताकाशसम्बन्धिगमनाद्वा, सर्वावस्थासु=दुरवस्थापन्नास्वपि, आगता=विधिप्राप्ता, भर्त्तुः=स्वामिनः, पादच्छाया=पादसेवा, विशिष्यते=अतिरिच्यते अधिकं भवतीत्यर्थः । सकलभर्त्तृधर्मरहितस्यापि भर्त्तुः सर्वपरित्यागेन पादसेवनमेव स्त्रीणां समुचितमिति भावः ।

**इन्दुमती**—( सीताजीने कहा- ) हे नाथ ! राजाओंके ऊँची अट्टालियोंमें

वास करनेसे तथा स्वर्गके पुष्पविमानों पर चलने से तथा आठो प्रकारके अणिमादि ऐश्वर्योंकी प्राप्तिसे जो सुख मिलता है, उससे कहीं अधिक सुख स्त्रीको पतिकी सेवा करने से प्राप्त होता है ॥

**अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् ।**
**नास्मि सम्प्रति वक्तव्या वर्त्तितव्यं यथा मया ॥ १० ॥**

**अन्वयः**—यथा, मया, वर्तितव्यं ( तथा ) विविधाश्रयं, पित्रा, च, मात्रा च, अनुशिष्टास्मि. ( अतः ) सम्प्रति, न, वक्तव्या, अस्मि ।

**सुधा**—उपदेशानुसारादपि मयानुगन्तव्यैवेति दर्शयति—**अनुशिष्टेति** **यथा**=येन प्रकारेण, **मया**=सीतया, वर्त्तितव्यं=भर्तृविषये स्थातव्यं, ( तथा ) विविधाश्रयं=विविधप्रकारम् अनेकदृष्टान्तविशिष्टमित्यर्थः, पित्रा=जनकेन, च=पुनः, मात्रा=जनन्या च, अनुशिष्टास्मि=उपदिष्टाऽहं शिक्षिताहमित्यर्थः अस्मीत्यहमर्थैकमव्ययम् । ( अतः ) सम्प्रति=इदानीं, ( भवता ) न वक्तव्या अस्मि=पतिसेवाविषये नोपदेष्टव्यास्मि । एवञ्च तव सेवायामेव यथावद्वर्त्तितव्यमित्याशयः ॥

**इन्दुमती**—( सीताजीने पुनः कहा-हे नाथ ! पति-सेवाका क्या महत्व है और वह किस विधिसे करनी चाहिये इसको मैं अच्छी तरहसे जानती हूँ क्योंकि- ) मेरी माता और पिता राजर्षि मिथिलेश महाराज जनकने अनेक प्रकारके दृष्टान्त दे देकर पति-सेवाकी विधि समझा दी है । अतः अब इस विषयमें मुझे अधिक वतलानेकी आवश्यकता नहीं ( मैं आपके साथ अवश्य चलूंगी ) ॥

**अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।**
**नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ ११ ॥**

**अन्वयः**—नानामृगगणाकीर्णं, शार्दूलवृकसेवितं, दुर्गं, वनं, पुरुषवर्जितं ( यथास्यात्तथा ) अहं, गमिष्यामि ।

**सुधा**—उपदेशफलं प्रतिपादयति—अहमिति । नानामृगगणाकीर्णं=नानामृगाणां—विविधप्रकारहरिणानां, गणैः—समूहैः, आकीर्णं—व्याप्तं, "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः" इति विश्वः, शार्दूलवृकसेवितं=शार्दूलाः-व्याघ्राः, वृकाः—ईहामृगाः तैः सेवितम्—आश्रितं "शार्दूलद्वीपिनो व्याघ्रे इति, कोक ईहामृगो वृकः" इति चामरः । दुर्गं=गहनं, वनं=दण्डकारण्यं, पुरुषवर्जितं=भृत्यादिरहितं ( यथास्यात्तथा, क्रियाविशेषणमिदम् ) अहं गमिष्यामि=अहं व्रजिष्यामि ।

**इन्दुमती**—(सीताजीने कहा—) हे नाथ ! मैं अवश्य ही आपके साथ वन जाऊगी, चाहे वह वन नाना प्रकारके चित्र-विचित्र वनैले पशुओं से व्याप्त और व्याघ्र एवं वृक ( हुंराड़ ) आदि भयानक व घातक जन्तुओं से सेवित दुर्गम निर्जन वन क्यों न हो । (इसकी मुझे परवाह नहीं है) ।

**सुखं वने निवत्स्यामि यथैव भवने पितुः ।**
**अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥ १२ ॥**

**अन्वयः**—पितुः, भवने, यथा, ( तथा ) एव, त्रीन् , लोकान् , अचिन्तयन्ती, ( केवलं ) पतिव्रतं, चिन्तयन्ती, ( त्वया सह ) वने, सुखं, निवत्स्यामि ।

**सुधा**—त्वया सह वनवासे क्लेशलेशशङ्काऽपि नेत्याह—**सुखमि**ति । पितुः = जनकस्य, भवने=गृहे, यथा = येन प्रकारेण, ( सुखपूर्वकं तिष्ठामि तथा ) एव, त्रीन् लोकान् = त्रैलोक्याधिपत्यमपि, अचिन्तयन्ती = अगणयन्ती, पतिव्रतं = पतिविषयकं व्रतं पतिसेवारूपधर्ममित्यर्थः । चिन्तयन्ती=ध्यायन्ती (त्वया सह) वने=दण्डकारण्ये सुखं=सुखपूर्वकं (यथास्यात्तथा) निवत्स्यामि=वसिष्यामि ।

**इन्दुमती**—( सीताजीने कहा— ) हे स्वामिन् ! मैं जैसे अपने पिताके घरमें सुखसे रहती थी वैसे ही मैं वनमें बड़ी खुशीसे रहूँगी । ( हे नाथ ! ) वनमें मुझे केवल पति-सेवाकी ही चिन्ता रहेगी । पति-सेवाके सामने मैं तीनों लोकों के सुख-प्राप्तिको तुच्छ समझती हूँ । वनमें उस सुखकी कल्पना मैं नहीं करूंगी ।

**शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।**
**सह रंस्ये त्वया वीर ! वनेषु मधुगन्धिषु ॥ १३ ॥**

**अन्वयः**—हे वीर ! मधुगन्धिषु, वनेषु, नित्यं, शुश्रूषमाणा, नियता, ब्रह्मचारिणी, ( सती ) त्वया, सह, रंस्ये ।

**सुधा**—हे वीर = क्षात्रतेजःसम्पन्न !, मधुगन्धिषु = पुष्परससुरभिषु, "मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः" इत्यनेकार्थः । वनेषु = अरण्येषु, नित्यं=प्रतिदिनं, शुश्रूषमाणा = सेवमाना, नियता=त्वदुपदिष्टनियमयुक्ता, ब्रह्मचारिणी = तपश्चरणशीला कामभोगपरिवर्जितेत्यर्थः, ( सती ) त्वया = भवता, सह = साकं, रंस्ये = विहरिस्ये, अपूर्वदर्शनसंतुष्टा भविष्यामीत्यर्थः । अनेन वनगमनविषयक उत्साहो दर्शितः ।

**इन्दुमती**—(सीताजीने कहा—) हे वीर क्षत्रिय कुमार ! मैं वनमें आपकी आज्ञानुसार प्रति-दिन नियमपूर्वक विषय-वासनासे निरत होकर आपके साथ

उन मधुर गन्धयुक्त दण्डकारण्य आदि महाबनोंमें विचरूंगी ।

त्वं हि कर्त्तुं वने शक्तो राम ! संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ! ॥ १४ ॥

**अन्वयः**—हे राम ! हि, त्वम् , इह, (यदि) अन्यस्य, अपि, जनस्य, वने, संपरिपालनं, कर्त्तुं, शक्तः, (तर्हि) हे मानद ! मम, पुनः किम् ? ।

**सुधा**—हे राम=स्वामिन् ! हि=यतः, त्वं=भवान् , इह=अस्मिन् संसारे, ( यदि ) अन्यस्य=स्वधर्मरहितस्यापि, जनस्य=जीवसमुदायस्य, वने=अरण्ये, संपरिपालनं=संरक्षणं, कर्त्तुं=विधातुं, शक्तः=समर्थः ( तर्हि ) हे मानद=संमानप्रद !, मम=तवानुगामिन्याः सीतायाः, पुनः किं=किं वक्तव्यम् ? सकलजीवसंरक्षणसमर्थस्य तव ममापि संरक्षणं स्यादेवेति भावः ।

**इन्दुमती**—(सीताजीने कहा-) हे मानद ( मनोरथको सिद्धि करने वाले ) राम ! यहां पर मुझे यह शंकाही नहीं होती कि—जब आप बनमें दूसरोंका भरण-पोषण करनेमें समर्थ हैं, तब फिर आप मेरी (अपनी पत्नी सीता की) रक्षा नहीं कर सकेंगे ।

साहं त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग ! निवर्त्तयितुमुद्यता ॥ १५ ॥

**अन्वयः**—सा, अहम् , अद्य, त्वया, (सह) वनं, गमिष्यामि, ( अत्र ) संशयः, न, हे महाभाग ! उद्यता, अहं, (त्वया) निवर्त्तयितुं, न, शक्या ।

**सुधा**—ममानुगमननिवृत्तिवार्त्ता भवता न विधेयेत्यवगमयन्ती आह-सेति । सा, अहं=सीता, अद्य=अस्मिन्नहनि, त्वया=भवता, (सह) वनं=दण्डकारण्यं, गमिष्यामि=व्रजिष्यामि, ( अत्र ) संशयः=संदेहः, न=नहि, विषयेऽस्मिन् संदेहस्त्वया न विधेय इत्याशयः । हे महाभाग=

"आरभ्योत्पत्तिमामृत्योः कलङ्को यस्य नो भवेत् ।
स्याच्चैवानुपमाकीर्त्तिः स महाभाग उच्यते ।"

इत्युक्तलक्षण !, उद्यता=उद्युक्ता उद्योगं कुर्वन्तीत्यर्थः, वनं गन्तुमिति शेषः, अहं ( त्वया ) निवर्त्तयितुं=त्वच्छक्तिरूपत्वेन न्यायप्राप्तानुगमनत्वात् प्रत्यावर्त्तयितुं, न शक्या=न योग्या ।

**इन्दुमती**—( सीताजीने पुनः कहा- ) हे महाभाग ! मैं भी आज अवश्य आपके साथ बन जाऊँगी । अब कोई भी कारण मेरे यहां रहनेका नहीं है,

(अतः) आप मेरी बन यात्राको रोक नहीं सकते।

**फलमूलाशना नित्यं भविष्यामि न संशयः।**
**न ते दुःखं करिष्यामि निवसन्ती त्वया सह ॥**
**अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि ॥ १६ ॥**

**अन्वयः**—नित्यं, फलमूलाशना, भविष्यामि, (अत्र) संशयः, न, (तथा) ते, अग्रतः, गमिष्यामि, त्वयि, भुक्तवति, भोक्ष्ये, (एवं) त्वया, सह, निवसन्ती, ते, दुःखं, न, करिष्यामि।

**सुधा**--ननु त्वदुद्देश्यकाशनादिप्रबन्धेन मम क्लेशः स्यादित्यत आह-फलमूलेत्यादि। नित्यं=प्रतिदिनं, फलमूलाशना=स्वार्जितफलमूलभोजना, भविष्यामि, (अत्र) संशयः=संदेहः, न=नहि, (तथा) ते=गमनविशिष्टस्य तव, अग्रतः=संमुखात्, गमिष्यामि=व्रजिष्यामि, त्वयि=भवति, भुक्तवति=खादति सति, भोक्ष्ये=अत्स्यामि, (एवं) त्वया=भवता, सह=साकं, निवसन्ती=वासं विदधती, ते=तव, दुःखम्=अशनपानाभ्यर्थनरूपं, न करिष्यामि=नोत्पादयिष्यामि। यद्वा शक्तिरूपत्वात्त्वया सह सर्वदा निवसन्ती दुःखमयकार्यापि, यथा पूर्वं कस्मिन्नपि समये दुःखं न कृतवती एवमग्रेऽपि न करिष्यामीत्याशयः।

**इन्दुमती**—(सीताजीने कहा-) मैं बनमें क्या खाऊँगी इसकी चिन्ता आप न करें) हे नाथ! मैं सत्य कहती हूँ, आप विश्वास कीजिये, आपके साथ बनमें आपकी तरह ही रहूंगी। आपके भोजन करनेके पश्चात् मैं भी नित्य फल-मूल ही भोजन करूंगी और आपको (उसके लिये भी) कष्ट नहीं दूंगी।

**इच्छामि सरितः शैलान् पल्वलानि सरांसि च।**
**द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १७ ॥**

**अन्वयः**—धीमता, नाथेन, त्वया (सहिताहं) सरितः, शैलान्, पल्वलानि, सरांसि, च, सर्वत्र, निर्भीता, द्रष्टुम्, इच्छामि।

**सुधा**—धीमता=बुद्धिमता, नाथेन=स्वामिना, त्वया=भवता (सहिताहं) सरितः=नद्यः, शैलान्=पर्वतान्, पल्वलानि=अल्पसरांसि, सरांसि=महातडागांश्च "अथ नदी सरित्"। "पल्वलोऽल्पजलाशयः" इत्यमरः। "सरो नीरतडागयोः" इति कोषः, सर्वत्र=सर्वस्थले, निर्भीता=निर्भीका भयरहितेत्यर्थः, द्रष्टुम्=अवलोकयितुम्, इच्छामि=अभिलषामि।

**इन्दुमती**—(सीताजीने कहा-मैं आपको बनमें अपने भरण-पोषणका

कष्ट नहीं दूंगी ) केवल यही चाहती हूँ कि-हे नाथ ! मैं आपके ऐसे बुद्धिमान् प्राणनाथके साथ भय रहित होकर बनमें सर्वत्र घूमती हुई बनके नदियोंको बड़े २ ऊँचे विशाल पर्वतोंको, झीलोंको और महातरङ्गों को देखूँ ।

**हंसकारण्डवाकीर्णाः पद्मिनीः साधु पुष्पिताः ।**
**इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण संगता ॥ १८ ॥**

**अन्वयः**—वीरेण, त्वया, संगता, सुखिनी ( अहं ) हंसकारण्डवाकीर्णाः, साधु, पुष्पिताः, पद्मिनीः, द्रष्टुम् , इच्छेयम् ।

**सुधा**—वीरेण = क्षात्रतेजःसम्पन्नेन, त्वया = भवता, संगता = संयुता, सुखिनी = प्रमोदवती, (अहं) हंसकारण्डवाकीर्णाः = हंसाः—मानसौकसाः, कारण्डवाः—जलकुक्कुटाः, हंसाश्च कारण्डवाश्च हंसकारण्डवास्तैः आकीर्णाः—व्याप्ताः, "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इति "मद्गुः कारण्डवः प्लवः" इति चामरः । साधु = सम्यक् , पुष्पिताः = विकसिताः, पद्मिनीः = कमलिनीः, द्रष्टुम् = अवलोकयितुम् , इच्छेयम्=अभिलषेयम् ।

**इन्दुमती**—( पुनश्च सीताजीने कहा- ) हे नाथ ! मैं चाहती हूं कि आपके ऐसे वीर क्षत्रिय कुमारके साथ सुखपूर्वक रहकर बनके—हंस तथा कारण्डव नामके पक्षियोंसे सेवित और सुन्दर विकसित कमलिनियोंसे युक्त बनके सुन्दर तड़ागोंको देखूँ ।

**अभिषेकं करिष्यामि तासु नित्यमनुव्रता ।**
**सह त्वया विशालाक्ष ! रंस्ये परमनन्दिनी ॥ १९ ॥**

**अन्वयः**—हे विशालाक्ष ! तासु, नित्यम् , अनुव्रता, ( अहम् ) अभिषेकं, करिष्यामि, ( तथा ) परमनन्दिनी ( सती ) त्वया, सह, रंस्ये ।

**सुधा**—हे विशालाक्ष ! विशाले—दीर्घे, अक्षिणी-लोचने यस्य सः विशालाक्षस्तत्सम्बुद्धौ । तासु = पद्मिनीषु, नित्यं = प्रतिदिनम् , अनुव्रता = ब्रह्मचर्यादिव्रतपालनतत्परा, ( अहम् ) अभिषेकं = स्नानं, करिष्यामि = विधास्यामि, ( तथा ) परमनन्दिनी=परमानन्दयुक्ता, ( सती ) त्वया = भवता, सह रंस्ये= विहरिष्ये, तत्रापूर्वावलोकनेन सन्तुष्टा भविष्यामीत्यर्थः ।

**इन्दुमती**—( सीताजीने कहा- ) हे विशालाक्ष ! बनके उन ( हंस-कारण्डवाकीर्ण तथा कमलिनियोंसे सुशोभित ) तड़ागोंमें व्रतनियम तत्पर होकर ( जल-क्रीड़ाकी भावना त्यागकर ) आपके साथ स्नान करूंगी और परमानन्दित

होकर वन-विहारका सुख प्राप्त करूंगी।

**एवं वर्षसहस्राणि शतं वापि त्वया सह।**
**व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि हि न मे मतः॥ २०॥**

अन्वयः—एवं, व्यतिक्रमं, वर्षसहस्राणि, वा, शतम्, अपि, त्वया, सह, (वसन्ती,) न, वेत्स्यामि, हि, स्वर्गः, अपि, मे, न मतः।

सुधा—एवम् = एतादृशरमणप्रकारेण, व्यतिक्रमं = वनवासदुःखं वर्षसहस्राणि = सहस्रवर्षपर्यन्तं, वा=अथवा, शतम् = शतवर्षमपि, त्वया = भवता, सह, (वसन्ती) न वेत्स्यामि = न ज्ञास्यामि, किन्तु क्षणमिव चतुर्दशवर्षसमयं नेष्यामीत्याशयः। तत्र हेतुं दर्शयति—**स्वर्ग** इति। हि = यतः स्वर्गः = सुखविशेषोऽपि, मे = मम सीतायाः, न मतः = नाभिलषितः, त्वया विनेति शेषः।

**इन्दुमती**—(सीताजीने कहा-) हे नाथ! इस प्रकार आपके साथ (बनमें रमण करती हुई चौदह वर्ष को कौन कहे) हजार वर्ष भी क्यों न बीत जांय पर बनवासका कष्ट हमें नहीं मालुम होगा। हे नाथ! आपके विना मैं स्वर्ग-सुखकी भी अभिलाषा नहीं करती।

**स्वर्गेऽपि च विना वासो भविता यदि राघव।**
**त्वया विना नरव्याघ्र! नाहं तदपि रोचये॥ २१॥**

अन्वयः—हे राघव! यदि, स्वर्गे, अपि, त्वया, विना, वासः, भविता, (तदा) हे नरव्याघ्र! तदपि, त्वया विना, अहं, न, रोचये।

सुधा—'स्वर्गोऽपि हि न रोचते'' इत्युक्तं तदेव स्पष्टयति—**स्वर्गेऽपीति**। हे राघव = राम!, यदि = चेत्, स्वर्गेऽपि = सुरलोकेऽपि, त्वया = भवता विना, वासः=स्थितिः, भविता = सम्भवेदित्यर्थः, (तदा) हे नरव्याघ्र = नरश्रेष्ठ! तदपि = तत्सुखमपि, त्वया=भवता विना, अहं न रोचये = अहं न कामये। यत्र येन प्रकारेण भवान् स्थास्यति अहमपि तत्र तेन प्रकारेण स्थास्यामि ततोऽधिकं सुखमकिञ्चित्करमेवेत्याशयः। त्वयेत्येकमपि पदमर्थसमन्वयायोभयत्रापि योजनीयम्।

**इन्दुमती**—(सीताजीने स्वर्गके बारेमें पुनः कहा-) हे राघव! हे नरश्रेष्ठ! यदि आपके विना मुझे स्वर्गमें रहना पड़े, तो मुझे वह भी पसन्द नहीं होगा॥

**अहं गमिष्यामि वनं सुदुर्गमं, मृगायुतं वानरवारणैर्युतम्।**
**वने निवत्स्यामि यथा पितुर्गृहे, तवैव पादावुपगृह्य संमता॥ २२॥**

**अन्वयः**—(हे राघव!) मृगायुतं, वानरवारणैः, युतं, सुदुर्गमं, वनम्,

अहं, गमिष्यामि, ( तथा ) यथा, पितुः, गृहे, ( तथा ) पादौ, उपगृह्य, तव, संमता, एव, वने, निवत्स्यामि ।

**सुधा**—अथोपसंहरति—अहमिति । ( हे राघव ! ) मृगायुतं=मृगैः—हरिणैः, आ-समन्तात्, युतं=युक्तं, वानरवारणैः=वानराः-कपयः, वारणाः—हस्तिनः, वानराश्च वारणाश्चेति वानरवारणाः तैस्तथोक्तैः, युतं=संयुतम्, सुदुर्गमं=कातरगमनानर्हं, वनं=दण्डकारण्यम्, अहं गमिष्यामि,=अहं व्रजिष्यामि, ( तथा ) यथा=येन प्रकारेण, पितुः=जनकस्य, गृहे=भवने ( सुखपूर्वकमासं तथा ) पादौ=भवच्चरणौ, उपगृह्य=गृहीत्वा, तव संमतैव=भवत्संमतविषयीभूतैव, भवदाज्ञावर्त्तिन्येवेति यावत्, वने निवत्स्यामि=वने वसिष्यामि, अत्र वनपदस्य पुनरुपादानादपरोऽर्थोऽपि प्रतीयते । तथाहि—मृगायुतं=मृगरूपधारिमारीचयुतं, वानरवारणैः=कपिश्रेष्ठैः सुग्रीवादिभिः, युतं=युक्तं, सुदुर्गमं, वनमहं गमिष्यामि, तथा तवैव पादावुपगृह्य, संमता=संयता, पितुर्गृह इव, वने=अशोकवनेऽपि निवत्स्यामि । तथा च वने मारीचमृगप्रसङ्गेनावयोर्वियोगे "त्वं मया विना कथं स्थातुं शक्ताऽसी" त्येवं न चिन्तनीयमित्यभिप्रायः ।

**इन्दुमती**—( अन्तमें सीताजीने कहा-- ) हे नाथ ! मैं तो आपके साथ ही उस महान् दुर्गम दण्डकारण्य वनमें चलूंगी, जो हरिणोंसे युक्त और बन्दरों तथा हाथियोंसे सेवित है । हे नाथ ! जैसे मैं अपने पिता मिथिलेश जनकके घरमें सुखसे रहती थी, उसी प्रकार वनमें आपकी चरण-सेवा करती हुई सुख पूर्वक रहूँगी ।

**अनन्यभावामनुरक्तचेतसं, त्वया वियुक्तां मरणाय निश्चिताम् ।**
**नयस्व मां साधु कुरुष्व याचनां, न ते मयातो गुरुता भविष्यति।२३।**

**अन्वयः**—अनन्यभावाम्, अनुरक्तचेतसं, त्वया, वियुक्तां, मरणाय, निश्चिताम्, मां, नयस्व, याचनां, साधु, कुरुष्व, मया, अतः, ते, गुरुता, न, भविष्यति ।

**सुधा**—अनन्यभावाम्=नास्ति, अन्यः—त्वदतिरिक्तविषयकः, भावः-स्नेहः, यस्याः सा तां तथोक्ताम्, अनुरक्तचेतसं=त्वद्विषयकपरमानुरागयुक्तचित्ताम्, ( अत एव ) त्वया वियुक्तां=त्वद्वियोगयुक्तां, 'स्वव्यक्तिमालक्ष्य' इति शेषः । मरणाय=प्राणत्यागाय, निश्चितां=कृतनिश्चितमतिं, मां=स्वप्राणवल्लभां, नयस्व=प्रापय, वनमिति शेषः, याचनां=मामिकां वनानुगमनप्रार्थनां, साधु=चरितार्थां, कुरुष्व=संपादय, मया=सीतया (क्रियमाणात्,) अतः=अनुगमनात्, ते=तव,

गुरुता = भारः, (यद्वा) अगुरुता-लघुता, न भविष्यति=न भविता । अपरार्थोऽपि यथा—अनन्यभावामनुरक्तचेतसं = रावणगृहीतामपि त्वय्येवासक्तहृदयां, त्वया वियुक्तां, ( वेण्युद्ग्रथनेन ) मरणाय निश्चितां, हनुमत्संदेशादिप्रेषणेन-नयस्वेति, याचनां=सुरकृतरावणवधप्रार्थनां, साधु कुरुष्वेति शेषं पूर्ववत् ।

**इन्दुमती**—( सीताजीने कहा— ) हे नाथ ! आपको छोड़कर मैं किसी दूसरेको जानती ही नहीं मेरा चित्त सदा आपहीमें अनुरक्त रहता है । अतः हे नाथ ! यदि आपसे बिछोह हुआ ( अपने साथ वन नहीं ले गये ) तो निश्चय ही मरने के लिये मैं तैयार हूँ । हे नाथ ! मेरी प्रार्थना स्वीकार कीजिये और अपने साथ मुझे भी वन लेते चलिये । मेरे लेजाने से आपको कुछ भी भार नहीं होगा ।

**तथा ब्रुवाणामपि धर्मवत्सलां, न च स्म सीतां नृवरो निनीषति ।**
**उवाच चैनां बहु सन्निवर्त्तने, वने निवासस्य च दुःखितां प्रति ।२४।**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तविंशः सर्गः ।

---

**अन्वयः**—धर्मवत्सलां, तथा, ब्रुवाणाम्, अपि, सीतां, नृवरः, न, च, निनीषति स्म, च, एनां, सन्निवर्त्तने, वने, निवासस्य, दुःखितां, प्रति च, बहु, उवाच ।

**सुधा**—धर्मवत्सलां = धर्मयुक्तवात्सल्यविशिष्टां, तथा = तेन प्रकारेण, ब्रुवाणाम् अपि, = अभिधीयमानामपि, सीतां = जनकनन्दिनीं, नृवरः = नरश्रेष्ठः, न च निनीषति स्म = न च नेतुमिच्छति स्म, च = तथा, एनां=सीतां, सन्निवर्त्तने=वन-गमनप्रवृत्तिनिवृत्यर्थे, वने निवासस्य = वनवासस्य, दुःखितां = तत्संबन्धिदुःखं प्रति च, बहु=अनेकविधं (यथास्यात्तथा क्रियाविशेषणमिदम् ) उवाच=उक्तवान् ।

इति श्रीवाल्मीकीयरामायणेऽयोध्याकाण्डे "सुधा" टीकायां सप्तविंशः सर्गः ।

---

**इन्दुमती**—पति-धर्ममे स्नेह रखने वाली सती सीताजीके इस प्रकार प्रार्थना पूर्वक करने पर भी पुरुषश्रेष्ठ श्रीरामचन्द्रजी सीताजीको अपने साथ वन लेजाने के लिये राजी नहीं हुए । प्रत्युत सीताजीकी वनगमन प्रवृत्तिको दूर करनेके लिये वनवासके अनेक कष्टोंका वर्णन करने लगे ।

इस प्रकार इन्दुमती टीकामें अयोध्या काण्डका सत्ताइसवां सर्ग समाप्त हुआ ।

---

## अष्टाविंश सर्गः

## पतिव्रता सीता

**स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।**
**न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥**

**अन्वयः**—धर्मवत्सलः, धर्मज्ञः, सः, वने, दुःखानि, चिन्तयन्, ( सन् ) एवं, ब्रुवतीं, सीतां, नेतुं, बुद्धिं, न कुरुते ।

**सुधा**—"वने निवासस्य च दुःखितामि" त्युक्तमेव स्पष्टीकुर्वन्नाह—**स एव**-मिति । धर्मवत्सलः = धर्मप्रेमी, कान्ताक्लेशासहिष्णुरिति केचित्, धर्मज्ञः=धर्मवेत्ता, सः=रामः, वने दुःखानि = वनवासदुःखानि, चिन्तयन् = विचारयन् ( सन् ) एवम्=उक्तप्रकारेण, ब्रुवतीं=कथयतीं, सीतां=स्वधर्मपत्नीं, नेतुं=वनं प्रापयितुं, बुद्धिं=निश्चयं, न कुरुते = न विधत्ते ।

**इन्दुमती**—( ग्रन्थकार महर्षि वाल्मीकिजी कहते हैं कि ) एवं प्रकारेण सीताजीके अनुनय विनय पूर्वक प्रार्थना करने पर भी धर्ममें स्नेह रखने वाले धर्मज्ञ श्रीरामचन्द्रजी वनके कष्टोंको स्मरण कर सीताजीको वन लेजानेका विचार नहीं करने लगे ॥

**सान्त्वयित्वा ततस्तां तु वाष्पदूषितलोचनाम् ।**
**निवर्त्तनार्थे धर्मात्मा, वाक्यमेतदुवाच ह ॥ २ ॥**

**अन्वयः**—ततः, तु धर्मात्मा, वाष्पदूषितलोचनां, तां, सान्त्वयित्वा, ह, निवर्त्तनार्थे, एतत्, वाक्यम्, उवाच ।

**सुधा**—ततः=तदनन्तरं, तु, धर्मात्मा=धर्मशीलः रामः, वाष्पदूषितलोचनां= वाष्पेण-अश्रुजलेन, दूषिते-व्याप्ते, लोचने नयने यस्याः सा वाष्पदूषितलोचना तां तथोक्तां, तां=सीतां, सान्त्वयित्वा=प्रणयवचोभिराश्वास्य, ह=ततः, निवर्त्तनार्थे= निवृत्तिरूपप्रयोजनार्थम्, एतद् वाक्यं=वक्ष्यमाणवचनम्, उवाच=उक्तवान् ।

**इन्दुमती**—ततः ( वन नहीं लेजानेका विचार करके ) रोती हुई अपनी प्राणेश्वरी सीताको धर्मात्मा श्रीरामचन्द्रजीने पुनः समझाया और सीताजीको वन नहीं जानेका कारण इस प्रकार कहने लगे ॥

**सीते ! महाकुलीनासि धर्मे च निरता सदा ।**
**इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३ ॥**

अन्वयः—हे सीते ! ( त्वं ) महाकुलीना, असि, च, सदा, धर्मे, निरता, (असि, तथा सति) यथा, मे, मनसः, सुखं, (स्यात् , तथा) त्वम् , इह, आचरस्व।

सुधा—तद्वाक्यमेवाह-**सीते** इति। हे सीते = जनकात्मजे ! ( त्वं ) महाकुलीना = प्रशस्तवंशीया, असि = भवसि, च = तथा, सदा = सर्वस्मिन् काले, धर्मे धर्मानुष्ठाने, निरता = तत्परा, ( असि, तथा सति ) यथा = येन प्रकारेण, मे = मम तव बल्लभस्येत्यर्थः, मनसः=चित्तस्य, सुखम्=आनन्दः ( स्यात् , तथा ) त्वम् , इह = अयोध्यायामेव, आचरस्व = विधत्स्व। एवञ्च मदाज्ञतमत्पित्रादिसेवने कृते मे मनसः सुखं स्यादतस्तद्यथा भवेत्तथा त्वया सम्पादनीयमित्याशयः।

इन्दुमती—(रामचन्द्रजीने कहा-) हे सीते ! तुम महाकुलीना हो अर्थात् जगत्प्रसिद्ध महर्षि महाराज मिथिलेश जनक की पुत्री तथा सूर्यवंशी महाराज दशरथकी कुल-वधू-हो और सदा धर्म-पालनमें तत्पर रहती हो। अतः यहां ( अन्तः पुरमे पर्दोके भीतर ) रहकर ही तुम अपना धर्म पालन करो जिससे मेरा मन सुखी रहे ॥

**सीते ! यथा त्वां वक्ष्यामि तथा कार्यं त्वयाऽबले ।**
**वने दोषा हि बहवो वसतस्तान्निबोध मे ॥ ४ ॥**

अन्वयः—हे अबले ! सीते ! त्वया, यथा, कार्यं, तथा, त्वां, वच्मि, हि, वने, वसतः, बहवः, दोषाः, तान् , मे, निबोध।

सुधा—हे अबले = नास्ति बलम्—आत्मबलं यस्याः सा अबला, तत्सम्बुद्धौ, सीते = जनकात्मजे !, त्वया = भवत्या, यथा = येन प्रकारेण, कार्यं = कर्त्तव्यं, तथा = तेन प्रकारेण, त्वां = भवतीं, वच्मि = कथयामि उपदिशामीत्यर्थः, हि = यतः, वने, वसतः = निवसतः, बहवः = अनेके, दोषाः=आपत्तयः, सन्तीति शेषः। तान् = दोषान् , मे=मत्तः, निबोध=जानीहि। एवञ्च यतो वनं बहुदोषाक्रान्तमतो मदुक्तमवश्यमेव विधेयमिति भावः।

इन्दुमती—( रामचन्द्रजीने कहा- ) हे सीते ! मैं जैसा कहता हूं वैसाही तुमको करना चाहिये। हे अबले बलरहिते ( स्त्री ) ! वनवासमें अनेक प्रकारके कष्ट होते हैं। मैं उन कष्टोंको बतलाता हूँ तुम सुनो-

**सीते ! विमुच्यतामेषा वनवासकृता मतिः ।**
**बहुदोषं हि कान्तारं वन मित्यभिधीयते ॥ ५ ॥**

**अन्वयः**—हे सीते ! वनवासकृता, एषा, मतिः, विमुच्यताम् , हि, कान्तारं, वनं, बहुदोषम् , इति, अभिधीयते ।

**सुधा**—हे सीते = जनकात्मजे ! वनवासकृता = वनवासनिश्चिता, एषा = मत्समीपे बोधिता, मतिः = बुद्धिः, विमुच्यतां = परित्यज्यताम् , हि=यतः, कान्तारं = गहनत्वाद्दुष्प्रवेशं "महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम्" इत्यमरः । वनम्= अरण्यं, बहुदोषम् = अहिकण्टकादिवृत्तित्वादनेकदोषविशिष्टम् , इति=एवम् , अभिधीयते=कथ्यते अभिज्ञैरिति शेषः ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! तुम अपनाव न जानेका विचार छोड़दो क्योंकि वनवासमें अनेक तरहके कष्ट होते हैं इसी लिये शास्त्रकारोंने दंडकारण्य आदि महावनोंका नाम 'कान्तार' रक्खा है (जो वन चोर, कांट, व्याघ्र आदि उपद्रव युक्त दुर्गम हो उसे 'कान्तार' कहते हैं ) ॥

**हितबुद्ध्या खलु वचो मयैतदभिधीयते ।**
**सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥**

**अन्वयः**—सदा, सुखं, वनं, न जानामि (किन्तु) सदा, दुःखमेव, (जानामि अतः ) हितबुद्ध्या, मया, एतद् , वचः । अभिधीयते ।

**सुधा**—सदा = सर्वकालं, सुखं = सुखजनकं, वनम् = अरण्यं, न जानामि= न निश्चिनोमि ( किन्तु ) सदा = सर्वदा, दुःखमेव = क्लेशमेव, खलु = निश्चयेन, (जानामि, अतः) हितबुद्ध्या=त्वद्विषयकप्रीतिबुद्ध्या न तु त्वद्धरणादिक्लेशेनेत्यर्थः, मया=त्वद्धितकारिणा, एतद् = वनगमननिरोधकं, वचः=वचनम् , अभिधीयते = कथ्यते,

**इन्दुमती**—(रामचन्द्रजीने कहा-) हे प्रिये ! मैं ( पुनः २ ) तेरे कल्याणके लिये ही ऐसा कहता हूँ । ( तुम विश्वास करो ) वनमें कभी किसी प्रकारका सुख नहीं है वस्तुतः सदा दुःख ही दुःख है ॥

**गिरिनिर्झरसम्भूता गिरिकन्दरवासिनाम् ।**
**सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥**

**अन्वयः**—गिरिकन्दरवासिनां, सिंहानां, गिरिनिर्झरसम्भूता, निनदाः, श्रोतुं ( यतो ) दुःखाः, अतः, वनं, दुःखम् ।

**सुधा**—महावने विद्यमानानि दुःखान्येवाह—गिरिनिर्झरेत्यादिना । गिरिकन्दरवासिनां = गिरिकन्दराः-पर्वतनिर्दर्यः, तत्र वासिनां—निवसनशीलानां, सिंहा-

नां = मृगेन्द्राणां, गिरिनिर्झरसम्भूताः = गिरिनिर्झराः—गिरिनद्यः ( तस्या निनदैः ) सम्भूताः = प्रवृद्धाः पर्वतनदीशब्दवर्द्धिता इत्यर्थः, निनदाः=शब्दा "शब्दे निनादनिनद" इत्यमरः, श्रोतुम = आकर्णितुं ( यतो ) दुःखाः = क्लेशदायकाः, अतः = अस्माद्धेतोः, वनं=महारण्यं, दुःखं=क्लेशजनकम् , अस्तीति शेषः ।

इन्दुमती—( रामचन्द्रजीने कहा–हे सीते ! वनमें बड़ा कष्ट है क्योंकि- ) पर्वतोंकी चोटीसे गिरता हुआ झरनोंकी गड़-गड़ाहट सुननेसे तथा पर्वतोंके गुफाओंमें रहने वाले सिंहोंका भयङ्कर शब्द सुननेसे बड़ा कष्ट होता है । इसलिये हे प्रिये ! वन बड़ा कष्टप्रद है ॥

**क्रीड़मानाश्च विस्रब्धाः मत्ताः शून्ये तथा मृगाः ।**
**दृष्ट्वा समभिवर्त्तन्ते सीते ! दुःखमतो वनम् ॥ ८ ॥**

**अन्वयः**—तथा, शून्ये, विस्रब्धाः, (सन्तः) क्रीड़मानाः, (अत एव) मत्ताः, मृगाश्च, (मनुष्यान् ) दृष्ट्वा, (यतः) समभिवर्त्तन्ते, अतः, हे सीते ! वनं, दुःखम् ।

**सुधा**—तथा = अपि च, शून्ये = निर्मानुषे प्रदेशे, विस्रब्धाः = विश्वस्ताः निश्शङ्किता इत्यर्थः ( सन्तः ) क्रीड़मानाः = खेलन्तः ( अत एव ) मत्ताः = मदेनाक्रान्ताः, मृगाः=हरिणाः, ( मनुष्यान् ) दृष्ट्वा = अवलोक्य, ( यतः ) समभिवर्त्तन्ते = अपूर्वदर्शनाद्धन्तुं सम्मुखमायान्ति, अतः = अस्मात् कारणात्, हे सीते = जनकात्मजे ! वनं=महारण्यं, दुःखं=क्लेशजनकम् , अस्तीति शेषः ।

**इन्दुमती**—( रामचन्द्रजीने पुनः कहा— ) हे सीते ! निर्जन वनमें निःशंक होकर विचरण करने वाले बदमाश ( बड़े २ सींग वाले ) हरना मृग मनुष्यको देखते ही मारडालने के लिये सन्मुख दौड़ते है अतः वन बड़ा कष्ट प्रद है ।

**सग्राहाः सरितश्चैव पङ्कवत्यस्तु दुस्तराः ।**
**मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९ ॥**

**अन्वयः**—सग्राहाः, च, पङ्कवत्यः, नित्यं, मत्तैः, अपि, गजैः, ( युक्ताः ) ( यतः ) दुःस्तराः, अतः, अपि, वनं, तु, दुःखतरम् , एव ।

**सुधा**—सग्राहाः=सनक्राः,"ग्राहोऽवहारो नक्रस्तु" इत्यमरः, च=तथा, पङ्कवत्यः=बहुकर्दमयुक्ताः, नित्यं=प्रतिदिनं, मत्तैः=दानवारिणोत्कटैः, गजैः=हस्तिभिः ( युक्ता यतः ) दुस्तराः=तारतुमशक्याः अत अपि अस्माद्धेतोरपि, वनं=महारण्यं, तु, दुःखतरं=पूर्वोक्तदुःख संमेलनादतिशयेन दुःखवत् ।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे सीते ! ( और सुनो ) वनकी

नदियों में मगर घड़ियाल रहते हैं और नदियों के प्रदेश इतने दल-दल होते हैं कि नित्य उनको पार करना कठिन है ( अर्थात् हंस कारण्डवाकीर्ण और पद्मिनी सुपुष्पिता होनेपर भी वे नदियां नित्य स्नान करने योग्य नहीं हैं ) और बडे २ मत्त जङ्गली हाथीके लिये भी वे नदियाँ दुस्तर हैं। ( अथवा बड़े बड़े मत्त हाथी उस वनमें घूमा करते हैं ) अतः हे सीते ! वन अत्यन्त कष्ट प्रद है।

**लताकण्टकसंकीर्णाः कृकवाकूपनादिताः।**
**निरपाश्च सुदुःखाश्च मार्गा दुखमतो वनम् ॥ १० ॥**

**अन्वयः**—( यतस्तत्र ) लताकण्टकसंकीर्णाः, कृकवाकूपनादिताः, निरपाः, च, सुदुःखाः, मार्गाः, ( सन्ति ) अतः, च, वनं, दुःखम्।

**सुधा**—ननु यत्र गिरिनिर्झरादयो न सन्ति तेनैव पथा गमिष्यामीत्यत आह—**लताकण्टके**त्यादि। ( यतस्तत्र ) लताकण्टकसंकीर्णाः = लताः—पदाकर्षिण्यः, कण्टकाः-पादवेधकाः, लताश्च कण्टकाश्चेति लताकण्टकास्तैः संकीर्णाः-व्याप्ताः, कृकवाकूपनादिताः = कृकवाकवः-वनकुक्कुटाः तैः उपनादिताः-तन्नादयुक्ता इत्यर्थः निरपाः = निर्गतजलाः, च = तथा, सुदुःखाः = अतिदुःखहेतवः, मार्गाः=पन्थानः, ( सन्ति ) अतश्च=अस्मादपि हेतोः, वनं = महारण्यं, दुःखं = क्लेशजनकम्, अस्तीति शेषः।

**इन्दुमती**—( रामचन्द्रजीने पुनः कहा— ) हे सीते ! और पैरों मे लिपट जाने वाली लताओं तथा पैरोंमें चूभनेवाले काँटोंसे वनोंके मार्ग व्याप्त रहते हैं एवं वनमुर्गोका शब्द होता रहता है तथा मार्गों में पीनेको जल भी नहीं मिलता। इस तरह वनके मार्ग बड़े दुःख दायी होते हैं। अतः वन बड़ाही दुःख प्रद है।

**सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले।**
**रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ११ ॥**

**अन्वयः**—भूतले, स्वयं, भग्नासु, पर्णशय्यासु, रात्रिषु, श्रमखिन्नेन, (वनवासिना जनेन यस्मात्) सुप्यते, तस्मात्, वनं, दुःखतरम्।

**सुधा**—भूतले = पृथिव्याम् एव न तु पर्यङ्के, स्वयं = जीर्णतया स्वयमेव, भग्नासु=पतितासु, पर्णशय्यासु = पर्णमयतल्पेषु न तु मृदुतूलास्तरणेष्वित्यर्थः, रात्रिषु=निशासु न त्वहस्सु, श्रमखिन्नेन = फलमूलाद्याहरणश्रमक्लेशितेन ( वनवासिना जनेन यस्मात्, ) सुप्यते = शय्यते, एवञ्च तत्रापि स श्रमस्तदेव शयनञ्चाऽपि स्यादित्याशयः। तस्मात्=हेतोः, वनं=महारण्यं, दुःखतरम् = अत्यन्त क्लेशदायकम्, अस्तीति शेषः।

इन्दुमती—( रामचन्द्रजीने कहा—हे सीते ! इस तरहके दुर्गम मार्गको पार करनेके बाद— ) रातमें थके हुए वनवासियोंको जमीनमें अपने आप सूखकर तोरी हुई पत्तियाँ बिछाकर उनपर सोना पड़ता है । अतः वन बड़ा कष्ट-प्रद है ।

अहोरात्रं च सन्तोषः कर्त्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते ! दुःखमतो वनम् ॥ १२ ॥

अन्वयः—नियतात्मना, वृक्षावपतितैः, अहोरात्रं, च, सन्तोषः, ( यतः ) कर्त्तव्यः, अतः, हे सीते ! वनं, दुःखम् ।

सुधा—नियतात्मना = यतमनस्केन, ( वनवासिना जनेन ) वृक्षावपतितैः= वृक्षेभ्यः स्वयमेव पृथिव्यां भग्नैः, अहोरात्र=सायं प्रातश्च, सन्तोषः=भोजनतृप्तिः, ( यतः ) कर्त्तव्यः = विधेयः, अतः=अस्माद्धेतोः, हे सीते = जनकात्मजे ! वनं = महारण्यं, दुःखं=दुःखजनकम् , अस्तीति शेषः ।

इन्दुमती—( रामचन्द्रजीने कहा— ) हे सीते ! वनवासियोंको सभी अन्य भोज्य पदार्थोंकी अभिलाषा त्यागकर सायं प्रातः वृक्षोंसे गिरे हुए फल खाकर ही सन्तोष करना पड़ता है । अतः वन बड़ा कष्ट प्रद है ।

उपवासश्च कर्त्तव्यो यथाप्राणेन मैथिलि ! ।
जटाभारश्च कर्त्तव्यो वल्कलाम्बरधारिणा ॥ १३ ॥
देवतानां पितॄणां च कर्त्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४ ॥
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥

अन्वयः—हे मैथिलि ! वल्कलाम्बरधारिणा, ( जनेन ) यथाप्राणेन, उपवासः, कर्त्तव्यः, च, जटाभारः, च, कर्त्तव्यः, ( तथा ) देवानां, पितॄणां, च प्राप्तानाम् , (च) अतिथीनां, विधिपूर्वकं, प्रतिपूजनं, च कर्त्तव्यं, काले, काले, च, नियमेन, एव, चरतां, नित्यशः, त्रिः अभिषेकः, च, (यतः) कार्यः, तस्मात् , वनं, दुःखतरम् ।

सुधा—हे मैथिलि = मिथिलेशसुते !, वल्कलाम्बरधारिणा = वृक्षत्वग्वस्त्र धारिणा ( जनेन ) यथाप्राणेन = यथाशक्त्यनुसारेण, उपवासः = उपोषणं भोजनविरह इति तात्पर्यम् । कर्त्तव्यः = विधेयः, च = तथा, जटाभारः—जटायाः सटायाः, भारः—धारणं च कर्त्तव्यः, संस्काराभावाज्जटाभारविधानम् । ( तथा )

देवानां=विष्ण्वादीनां, पितॄणां=पितृलोकवासिनां, च=तथा, प्राप्तानां=यथाकथञ्चिदागतानाम्, अतिथीनाम्=अभ्यागतानां, विधिपूर्वकं=ब्रह्मचर्यविहितविधिना, प्रतिपूजनं=प्रत्यर्चनं, च, कर्त्तव्यं=विधेयम्, काले काले च=प्रातर्मध्याह्नसायाह्नेष्वित्यर्थः, नियमेन एव=यमादिनैव, चरतां=समययापनं कुर्वतां जनानां, नित्यशः=प्रतिदिनं, त्रिः=त्रिवारम्, अभिषेकः=स्नानं, कार्यः=कर्त्तव्यम्। तथा च तत्रासाधारणं दुःखमित्याशयः।

इन्दुमती—(रामचन्द्रजीने कहा-) हे मैथिलि सीते! वनमें यथा शक्ति उपवास भी करना पड़ता है (वृक्षोंसे गिरे हुए फल भी समय २ पर नहीं मिलते) तथा जटा धारण करना पड़ता है और वस्त्रकी जगह वल्कल (वृक्षकी छाल) पहनना पड़ता है। (हे सीते! इसप्रकार मुनिवेष धारण कर) वहां देवताओं, पितरों, और समयपर आये हुए अतिथियोंका विधिपूर्वक नित्यपूजन करना पड़ता है। हे सीते! इस प्रकार वनमें नियम पूर्वक रहनेवालोंको त्रिकाल स्नान करना पड़ता है। अत एव वन बहुतही कष्ट प्रद है॥

उपहारश्च कर्त्तव्यः कुसुमैः स्वयमाहृतैः।
आर्षेण विधिना वेद्यां सीते! दुःखमतो वनम्॥ १६॥

अन्वयः—स्वयम्, आहृतैः, कुसुमैः, आर्षेण, विधिना, वेद्याम्, उपहारः, च, कर्त्तव्यः, अतः, हे सीते! वनं, दुःखम्।

सुधा—स्वयम्=स्वतः, आहृतैः=आनीतैः, कुसुमैः=पुष्पैः आर्षेण=वेदविहितेन, विधिना=क्रमेण, उपहारः=पूजा, च, कर्त्तव्यः=विधेयः, अतः=अस्माद्धेतोः, हे सीते=जनकात्मजे! वनं=वनवासः, दुःखं=दुःखजनकम् अस्तीति शेषः।

इन्दुमती—(रामचन्द्रजीने कहा-) हे सीते! वनमें अपने हाथसे फूल तोड़कर वेद विहित विधिसे वेदीकी पूजा करनी पड़ती है अतः वनमे बड़ा कष्ट है॥

यथालब्धेन र्त्तकव्यः सन्तोषस्तेन मैथिलि!।
यताहारैर्वनचरः सीते! दुःखमतो वनम्॥ १७॥

अन्वयः—हे मैथिलि! यथालब्धन, तेन, यताहारैः, वनचरैः, सन्तोषः, कर्त्तव्यः, अतः, हे सीते! वनं, दुःखम्।

सुधा—हे मैथिलि=विदेहसुते!, यथालब्धेन=यथाकालं प्राप्तेन, तेन=फलमूलादिना, यताहारैः=नियमितभोजनैः, वनचरैः=किरातादिभिः, कर्त्तव्यः=

विधेयः, अतः = अस्माद्धेतोः, हे सीते=जनकात्मजे ! वनं = महारण्यम्, दुःखं=क्लेशजनकम्, अस्तीति शेषः ।

इन्दुमती—( रामचन्द्रजीने पुनः कहा- ) हे मैथिलि ! वनवासीको जिस समय जितना जो कुछ भोजनके लिये मिलता है उतने ही से उसे सन्तोष करना पड़ता है । अतः हे सीते ! वन बड़ा कष्टप्रद है ।

**अतीव वातस्तिमिरं बुभुक्षा चास्ति नित्यशः ।**
**भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८ ॥**

अन्वयः—अत्र, अतीव, वातः, ( तथा ) तिमिरं, च, ( रात्रिषु अतीव, अस्ति) बुभुक्षा, च ( अतीव ) अस्ति, नित्यशः, महान्ति, भयानि च, ( अतीव, सन्ति ) ततः, वनं, दुःखतरम् ।

सुधा—अत्र=महावने, अतीव=बहुलः, वातः=वायुः, (तथा) तिमिरम् अन्धकारश्च (रात्रिषु अतीव अस्ति) बुभुक्षा=जिघत्सा, च, (अतीव) अस्ति=वर्त्तते, नित्यशः=प्रतिदिनं, महान्ति=विपुलानि, भयानि=पूर्वोक्तत्रासाः, (अतीव, सन्ति)ततः= तस्माद्धेतोः, वनं=महारण्यं, दुःखतरं = पूर्वोक्तदुःखसंमेलनादतिशयेन दुःखवत् ।

इन्दुमती—( पुनश्च रामचन्द्रजीने कहा— ) हे सीते! वनमें वायुका बड़ा प्रकोप रहता है, जोरोंकी भयंकर आँधी आती रहती है, भयावह घोर अन्धकार छाजाता है तथा और भी अनेक प्रकारके भयके कारण उपस्थित रहते हैं एवं वनमें भूख-प्यास भी अधिक लगती हैं । अतः वन बड़ा कष्टप्रद है ।

**सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ! ।**
**चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥**

अन्वयः—हे भामिनि !, बहवः, बहुरूपाः, ते, सरीसृपाः, च, दर्पात्, पथि, चरन्ति, ततश्च, वनं, दुःखतरम् ।

सुधा—हे भामिनि = विलासवति !, बहवः=अनेके, बहुरूपाः=पृथुशरीराः, ते = प्रसिद्धाः, सरीसृपाश्च = गिरिसर्पाश्च, स्थलनिवासिसर्पा वा, दर्पात् = "मम घातकः कश्चन न विद्यत" इत्यहङ्कारात्, पथि=मार्गे, चरन्ति=भ्रमन्ति, ततः= तस्मादपि हेतोः, वनं=महारण्यं, दुःखतरम्=अतिशयेन दुःखवत् 'अस्तीति' शेषः ।

इन्दुमती—( रामचन्द्रजीने कहा— ) हे भामिनि ( विलासिनि ) सीते ! वनमें अनेक प्रकारके पहाड़ी अजगर आदि भयंकर सर्प बड़े दर्पके साथ फुफकार करते हुए घूमा करते हैं । अतः वन बड़ा कष्टप्रद है ।

नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ २० ॥

**अन्वयः**—नदीनिलयनाः, ( अत एव ) नदीकुटिलगामिनः, सर्पाः, पन्थानम् , आवृत्य, तिष्ठन्ति, अतः, वनं, दुःखतरम् ।

**सुधा**—नदीनिलयनाः=नदी-सरिदेव, निलयनं=वासस्थानं येषां ते तथोक्ताः, ( अत एव ) नदीकुटिलगामिनः = नदीवत् कुटिलगमनशीलाः, सर्पाः=भुजङ्गाः, पन्थानं=मार्गम् , आवृत्य = परिवृत्य, तिष्ठन्ति=उपविशन्ति, अतः = अस्माद्धेतोः, वनं = महारण्यं, दुःखतरम् = अतिशयेन क्लेशवत् ।

**इन्दुमती**—( रामचन्द्रजीने पुनः कहा— ) हे सीते ! वनकी नदियों में रहने वाले सर्प जो कि नदीकी ही तरह टेढ़ी-मेढ़ी चालसे चला करते हैं, रास्ता रोककर सामने खड़े हो जाते हैं । अतः हे सीते ! वन बड़ा कष्टप्रद है ।

पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
बाधन्ते नित्यमबले ! सर्वं दुःखमतो वनम् ॥ २१ ॥

**अन्वयः**—हे अबले ! नित्यं, पतङ्गाः, वृश्चिकाः, कीटाः, मशकैः, सह, दंशाश्च, बाधन्ते, अतः, सर्वं, वनं, दुःखम् ।

**सुधा**—हे अबले = कातरे ! नित्यं = प्रतिदिनं, पतङ्गाः = शलभादयः, वृश्चिकाः = अलयः "अलिद्रुणौ तु वृश्चिके" इत्यमरः, कीटाः=कृमयः, मशकैः= दंन्दशूकैः, सह=सार्धं, दंशाश्च=वनमक्षिकाश्च, बाधन्ते=पीडयन्ति, अतः=अस्माद्धेतोः, सर्वं = निखिलं, वनं = महारण्यं, दुःखं = क्लेशजनकम् । अत्राबलेतिपदोपादानेन तन्निवारणासामर्थ्यं व्यज्यते ।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे अबले ! वनमें पतङ्गे, भौंरे, कीड़े, मधु मक्खियां, मच्छर आदि नित्य पीडा देते हैं । अतः हे सीते ! वन बड़ा कष्टप्रद है ।

द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि ! ।
वने व्याकुलशाखाग्रास्ते न दुःखमतो वनम् ॥ २२ ॥

**अन्वयः**—हे भामिनि !, वने, कण्टकिनः, द्रुमाः, ( सन्ति ) च, व्याकुलशाखाग्राः, ते, कुशाः, काशाश्च, न (सन्तीति न किन्तु सन्ति) एव, अतः, वनं दुःखम् ।

**सुधा**—हे भामिनि=विलासवति !, वने = महारण्ये, कण्टकिनः = बहुकण्ट-

कवन्तः, द्रुमाः = वृक्षाः, ( सन्ति ) च = तथा, व्याकुलशाखाग्राः = व्याकुलाः-परस्परसंकीर्णेन व्याप्ताः, शाखाग्राः-स्कन्धाग्रा येषां ते तथोक्ताः, ते = प्रसिद्धाः, कुशाः = बर्हिषः, काशाश्च=इक्षुगन्धाश्च "अथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः" इत्यमरः । (इत्युक्ताः) न ( सन्तीति न किन्तु सन्ति ) एव, अतः=अस्माद्धेतोः, वनं = महारण्यं, दुःखं = क्लेशजनकम् ।

इन्दुमती—( रामचन्द्रजीने कहा- ) हे भामिनि ! चूभने वाले काँटोंसे युक्त तथा बिखड़े हुए शाखावाले सघन वृक्षोंसे तथा कुश, काश आदिसे समस्त वन बीहड़ व्याप्त रहता है अतः हे भामिनि (विलासिनि) ! वन बड़ा ही कष्टप्रद है ।

**कायक्लेशाश्च बहवो भयानि विविधानि च ।**
**अरण्यवासे वसतो दुःखमेव ततो वनम् ॥ २३ ॥**

**अन्वयः**—अरण्यवासे, वसतः, बहवः, कायक्लेशाः, च, विविधानि, भयानि, च, ( भवन्ति ) ततः, वनं, दुःखमेव ।

**सुधा**—अरण्यवासे=काननरूपवासस्थाने, वसतः = निवसतः, बहवः=अनेके, कायक्लेशाः = व्रतोपवासादयः, च = तथा, विविधानि = नानाप्रकाराणि, भयानि=पूर्वोक्तत्रासाश्च, ( भवन्ति ) ततः=तस्माद्धेतोः, वनं=महारण्यं, दुःखमेव = क्लेशजनकमेव ।

इन्दुमती—( रामचन्द्रजीने कहा— ) हे विलासिनि ! इस प्रकार वनमें शारीरिक अनेक क्लेश होते हैं तथा विविध प्रकारके भय उत्पन्न हुआ करते हैं । अतः हे सीते ! वन बड़ा कष्टप्रद है ।

**क्रोधलोभौ विमोक्तव्यौ कर्त्तव्या तपसे मतिः ।**
**न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनम् ॥ २४ ॥**

**अन्वयः**—( वने हि ) क्रोधलोभौ, विमोक्तव्यौ, ( भवतः ) तपसे, मतिः, कर्त्तव्या, ( भवति ) च, भेतव्ये, भेतव्यं, न, ( कर्त्तव्यं, भवति ) अतः, नित्यं, वनं, दुःखम् ।

**सुधा** -( वने हि ) क्रोधलोभौ = क्रोधः-किञ्चिदपि जातेऽपराधेऽसहिष्णुत्वं, लोभः—धनाद्यागमे बहुधा जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषः, क्रोधश्च लोभश्चेति तौ तथोक्तौ, विमोक्तव्यौ = परित्यक्तव्यौ ( भवतः ) तपसे = तपश्चर्यायां, मतिः = निश्चयः, कर्त्तव्या = विधेया, ( भवति ) च = तथा, भेतव्ये=भयहेतुभूतोक्तसर्पादौ तत्सन्निधावित्यर्थः । भेतव्यं = भयं, न, ( कर्त्तव्यं भवति ) अतः=

अस्माद्धेतोः, नित्यं = प्रतिदिनं, वनं = महारण्यं, दुःखं = क्लेशजनकम् ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! ( और सुनो ) वनमें क्रोध तथा लोभको त्यागकर तपमें मनको लगाना पड़ता है और डरने योग्य वस्तुओंसे भी डरना नहीं होता । अतः वन बड़ा कष्टप्रद है ।

**तदलं ते वनं गत्वा क्षेमं नहि वनं तव ! ।**
**विमृशन्निव पश्यामि बहुदोषकरं वनम् ॥ २५ ॥**

**अन्वयः**—तत् , ते, वनं, गत्वा, अलं, हि, तव, वनं, क्षेमं, न, ( अस्ति इति अहं ), विमृशन् , ( इहस्थोऽपि ) पश्यामि, इव ( अतः ) बहुदोषकरम् , ( इति ब्रवीमि )

**सुधा**—उपसंहरति-**तदल**मित्यादिना । तत् = तस्मात्कारणात् , ते, वनं = महारण्यं, गत्वा=व्रजित्वा, अलं=व्यर्थम् ,हि=यतः, तव=भवत्याः, क्षेमं=कल्याणं, न (अस्ति इति अहं) विमृशन्=तत्रत्यदोषान् विचारयन् , (इहस्थोऽपि) पश्यामि इव=अवलोकयामीव, ( अतः ) बहुदोषकरम् = अनेकापत्तिजनकं, वनं = महारण्यम् , ( इति ब्रवीमि )

**इन्दुमती**—( अन्तमें रामचन्द्रजीने कहा- ) हे सीते ! वनमें (उपर्युक्त बहुत ही कष्ट होते हैं) अतः तुम वनजानेकी अभिलाषा मत करो। वनमें तुम्हारा कल्याण नहीं होगा । मैं विचार कर देखता हूँ तो मुझे वनमें कष्टही कष्ट दिखाई पड़ते हैं ।

**वनं तु नेतुं न कृता मतिर्यदा, बभूव रामेण तदा महात्मना ।**
**न तस्य सीता वचनं चकार तं ततोऽब्रवीद्राममिदं सुदुःखिता॥२६॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टाविंशः सर्गः ।

---

**अन्वयः**—महात्मना, रामेण, वनं, नेतुं, मतिः, यदा, न, कृता, बभूव, तदा, तस्य, वचनं, सीता, न, चकार, ततः, सुदुःखिता, ( सती ) तं, रामम् , इदम् , अब्रवीत् ।

**सुधा**—महात्मना = विशालहृदयेन, रामेण = स्वपतिना, वनं = महारण्यं, नेतुं = प्रापयितुं, मतिः = निश्चयः, यदा=यस्मिन् काले, न कृता बभूव = न विहितेत्यर्थः, तदा = तस्मिन् काले, तस्य = रामस्य, वचनं = वनगमननिषेधकवाक्यं, सीता=वैदेही, न चकार=न स्वीचकार, भवतैवं न वाच्यमित्यनभिधाय तूष्णीभूय तस्थावित्यर्थः, तद्वचने विश्वासं कृतवतीत्याशयः । ततः = तदनन्तरं, सुदुःखिता=

स्वगमननिरोधनिश्चयेनातिदुःखिता ( सती ) तं, रामं = स्ववल्लभम् , इदम् = उत्तरसर्गे वक्ष्यमाणवचनम् , अब्रवीत् = अवोचत् ।

इति श्रीवाल्मीकीयरामायणेऽयोध्याकाण्डे "सुधा" टीकायामष्टाविंशः सर्गः ।

---

इन्दुमती—( महर्षि वाल्मीकिजी कहते हैं कि ) इस प्रकार कहकर जब महात्मा श्रीरामचन्द्रजीने सीताजीको वन लेजानेका विचार नहीं किया तब सीताजी उनकी कही बातोंको ( वनगमन निषेधक सभी कारणोंको ) न मान कर ( उपयुक्त नहीं समझकर ) अति दुःखी होकर कहने लगीं–।

इस प्रकार इन्दुमती टीकामें अयोध्या काण्डका अट्ठाइसवाँ सर्ग समाप्त हुआ ।

---

## एकोनत्रिंशः सर्गः ।

## पतिव्रता सीता

**एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता !**
**प्रसक्ताश्रुमुखी मन्दमिदं, वचनमब्रवीत् ॥ १ ॥**

**अन्वयः**—एतत् , रामस्य, वचनं, श्रुत्वा, दुःखिता, (अत एव) अश्रुमुखी, प्रसक्ता, सीता, मन्दम् , इदं, वचनम् , अब्रवीत् ।

**सुधा**—अग्रिमग्रन्थसङ्गतिप्रदर्शनायानुपदोक्तमप्यर्थं कथयन्नाह—**एतदिति** । एतत् = विरहसूचकं, रामस्य = स्ववल्लभस्य, वचनम् = वाक्यम्, श्रुत्वा आकर्ण्य, दुःखिता = क्लेशिता, ( अत एव ) अश्रुमुखी = नयनबिन्दुयुक्तानना, प्रसक्ता = पतिविविषयकात्यनुरागयुक्ता, सीता = वैदेही, "मन्दं" ( यथास्यात्तथा क्रिया विशेषणमिदम् ) इदं = वक्ष्यमाणं, वचनं=वाक्यम् , अब्रवीत्=अवोचत् । पूर्वसर्गान्ते "इदं" मित्यभिहितेऽपि विशेषणविशेषकथनार्थमिदंपदस्य पुनरिहोपादानम् ।

इन्दुमती—महर्षि वाल्मीकिजी कहते हैं कि रामचन्द्रजीके इस प्रकारके ( वनवासमें बड़ा कष्ट है अतः तुम यहीं रहो ) वचन सुनकर सीताजी बहुत दुःखी हुई, उनके नेत्रोंमें आंसू उमड़ आये । वे अश्रुपूर्ण मुखसे धीरे धीरे विनय पूर्वक ( पुनः ) रामचन्द्रजीसे कहने लगीं–।

**ये त्वया कीर्त्तिता दोषा वने वस्तव्यतां प्रति ।**
**गुणानित्येव तान्विद्धि तव स्नेहपुरस्कृतान् ॥ २ ॥**

**अन्वयः**—वने, वस्तव्यतां, प्रति, त्वया, ये, दोषाः, कीर्त्तिताः, तान् , तव, स्नेहपुरस्कृतान् , गुणान् , इत्येव, विद्धि ।

**सुधा**—तद्वचनमेव प्रतिपादयति—ये त्वयेति। वने=महारण्ये, वस्तव्यतां=वासं, प्रति, त्वया=भवता, ये=पूर्वोक्ताः, दोषाः=आपत्तयः, कीर्त्तिताः=कथिताः, तान्=दोषान्, तव स्नेहपुरस्कृतान्=त्वन्निष्ठप्रेमपुरस्कृतान्, गुणान्=हितकरान्, इत्येव विद्धि=इत्येव जानीहि। प्रेयसा भवता सह वर्त्तमानाया मम कलहंसकोकिलालापचन्दनमलयपवनवदानन्ददायकान् ताञ्जानीहीत्यर्थः।

**इन्दुमती**—सीताजीने कहा—हे नाथ! वनवासके जिन २ दोषोंका उल्लेख आपने किया है, वे सब आपके स्नेहके सामने मुझे गुणवत् प्रतीत हो रहे हैं।

**मृगाः सिंहा गजाश्चैव शार्दूलाः सरभास्तथा।**
**चमराः सृमराश्चैव ये चान्ये वनचारिणः॥ ३॥**
**अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव।।**
**रूपं दृष्ट्वाऽपसर्पेयुस्तव सर्वे हि बिभ्यति॥ ४॥**

**अन्वयः**—मृगाः, सिंहाः, च, गजाः, तथा, शार्दूलाः, शरभाः, चमराः, सृमराः, च, ये, च, अन्ये, एव, वनचारिणः, ते, सर्वे, हे राघव! अदृष्टपूर्वरूपत्वात्, तव, रूपं, दृष्ट्वा, अपसर्पेयुः, हि, सर्वे, तव, बिभ्यति।

**सुधा**—मृगाः=हरिणाः, सिंहाः=मृगेन्द्राः, च=पुनः, गजाः=हस्तिनः, एव=अपि, एवकारोऽत्राऽप्यर्थको ग्राह्य एवमग्रेऽपि। तथा, शार्दूलाः=व्याघ्राः, शरभाः=अष्टपादवन्तो मृगविशेषाः, चमराः=कृष्णसारमृगविशेषाः, सृमराः=गवयाः, च=पुनः, ये, च, अन्ये एव=एतदतिरिक्ता अपि, वनचारिणः=वनपर्यटनकारिणो वराहादयः, ते, सर्वे=निखिलाः, हे राघव=राम!, अदृष्टपूर्वरूपत्वात्=अदृष्टम्—अनवलोकितं, पूर्वं—प्राक्, रूपं—स्वरूपं यैः तेषां भावस्तस्मात् अदृष्टपूर्वरूपत्वात्, तव=भवतः, रूपं=स्वरूपं, दृष्ट्वा=अवलोक्य, अपसर्पेयुः=अपगच्छेयुः, पलायिता भवेयुरित्यर्थः, हि=यतः, सर्वे=ते पूर्वोक्ताः, तव=त्वत्तः, बिभ्यति=त्रस्यन्ति।

**इन्दुमती**—सीताजीने कहा हे राघव! मृग, सिंह, हाथी, व्याघ्र, शरभ (आठ पैरोंका जन्तुविशेष), कृष्णसारमृग और सृमर (नीलगाय) तथा और भी जो वनमें विचरण करने वाले (दुःखदायी) जीव-जन्तु हैं वे सब भी आपके इस अपूर्व रूपको (पहले पहल) देखकर भाग जाँयगें क्यों कि वे सब आपसे (धनुषधारियों से) डरते हैं॥

**त्वया च सह गन्तव्यं मया गुरुजनाज्ञया।**

त्वद्वियोगेन मे राम ! त्यक्तव्यमिह जीवितम् ॥ ५ ॥

**अन्वयः**—हे राम ! गुरुजनाज्ञया, त्वया, सह, मया, च, ( वनं ) गन्तव्यं, त्वद्वियोगेन, इह, जीवितं; त्यक्तव्यम् ( भवेत् ) ।

**सुधा**—हे राम = स्वामिन् !, गुरुजनाज्ञया = पित्रोराज्ञया, त्वया=भवता, सह, मया च = सीतया च तव पत्न्या, (वनं) गन्तव्यं = प्रव्रजितव्यम् , जायापत्योरेकात्मकत्वात् त्वन्निदेशेनैव ममाऽप्यादेशो जात इत्याशयः । **यद्वा**-गुरुजनाज्ञया "इयं सीता मम सुता छायेवाऽनुगता सदा" इति मत्पित्राद्याज्ञयोक्तरीत्याऽपि त्वया सह मया गन्तव्यमित्यर्थः । त्वद्वियोगेन = भवद्विरहेण, इह जीवितम् = अस्मिल्लोके स्थितिः, त्यक्तव्यं = परित्याज्यम् , ( भवेत् ) तस्मादवश्यं नेतव्यमित्यभिप्रायः ।

**इन्दुमती**—सीताजीने कहा हे आर्यपुत्र राम ! मुझको पिता- माता आदि गुरुजनोंकी आज्ञा है कि मुझे आपके साथ चलना चाहिये ( सुख-दुःखमें बराबर आपके साथ साथ रहना चाहिये ) । अतः हे नाथ ! यदि आप मुझको साथ नहीं ले चलेंगे तो मुझे आपके वियोगमें प्राण त्याग देना पड़ेगा ।

नहि मां त्वत्समीपस्थामपि शक्नोति राघव ! ।
सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥

**अन्वयः**—हे राघव ! त्वत्समीपस्थां, मां, सुराणाम् , ईश्वरः, शक्रः, अपि, ओजसा, प्रधर्षयितुं, नहि, शक्नोति ।

**सुधा**—हे राघव = राम !, त्वत्समीपस्थां = भवन्निकटवर्त्तिनीं, मां = तव जायां, सुराणां = देवानाम् , ईश्वरः = राजा, शक्रः = इन्द्रः, अपि, ओजसा = स्वपराक्रमेण, प्रधर्षयितुं = पराभवितुं, नहि शक्नोति=नहि समर्थो भवितुमर्हति । यत्र सुराधिपस्येयं दशा तत्रान्येषां का गणनेत्याशयः ।

**इन्दुमती**—सीताजीने कहा—हे राघव ! आपके साथ रहनेपर ( वनके जानवरोंकी कौन कहे ) देवताओंके स्वामी इन्द्र भी अपने पराक्रमसे मेरा कुछ बिगाड़ नहीं सकते ।

पति हीना तु या नारी न सा शक्ष्यति जीवितुम् ।
काममेवंविधं राम ! त्वया मम निदर्शितम् ॥ ७ ॥

**अन्वयः**—या, नारी, तु, पतिहीना, सा, जीवितुं, न, शक्ष्यति, हे राम ! एवंविधं, त्वया, मम, कामं, निदर्शितम् ।

**सुधा**—या, नारी तु = स्त्री तु, पतिहीना = पतिवियुक्ता, सा = नारी, जीवितुं = प्राणान् धारयितुं, न = नहि, शक्ष्यति = समर्थो भविष्यति, । इत्थं कथं ज्ञातमत आह--**काममिति** । हे राम = राघव !, एवंविधं=पतिहीनाया जीवनमशक्यमित्येवंरूपं, त्वया = भवता, मम, कामम्=अत्यर्थं, निदर्शितम् = उपदिष्टम् , एवं सति भरताऽनुकूलतया त्वयेह वस्तव्यमित्युपदेशोऽकिञ्चित्कर इति त्वया सह यास्याम्येवेत्याशयः । **यद्वा**--यद्यपि एवंविधं = उक्तप्रकारेण वनवासदुःखं, कामं, त्वया, मम, निदर्शितं, तथापि, तादृशवने, पतिहीना--प्रबलस्वामिहीना नारी, न जीवितुं शक्ष्यति, न तु मादृशो प्रबलभर्तृकेति मम गमने न कापि विप्रतिपत्तिरिति भावः ।

**इन्दुमती**—सीताजीने पुनः कहा--हे राम ! आपहीने तो मुझे यह उपदेश दिया है कि--पतिव्रता स्त्री पतिके विना जीवित नहीं रहसकती ( फिर क्या समझ कर मुझे वनजानेको नहीं कहते ? ) ।

**अथापि च महाप्राज्ञ ! ब्राह्मणानां मया श्रुतम् ।**
**पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८ ॥**

**अन्वयः**—अथ, अपि, हे महाप्राज्ञ ! पुरा, पितृगृहे, च, मया, ब्राह्मणानां, मे, वने, वस्तव्यं, किल, ( इति ) सत्यं ( वचः ) श्रुतम् ।

**सुधा**—स्ववनवासस्यावश्यकत्वं प्रदर्शयन्ती आह-**अथेति** । अथ अपि = वनस्य सदोषत्वेऽपि , हे महाप्राज्ञ = महाबुद्धिशालिन् !, पुरा = बाल्यावस्थायां, **पितृगृहे** = जनकगृहे, च, मया = सीतया, ब्राह्मणानां=ब्राह्मणेभ्यो ज्योतिर्विद्भ्यः, मे = मया, वने = महारण्ये, वस्तव्यं = निवसितव्यं, किल = निश्चयेन, ( इति ) सत्यं = तथ्यं ( वचः ) श्रुतम् = आकर्णितम् , अतोऽवश्यंभावित्वान्मम वनवासस्य न दोषगणनेत्यभिप्रायः ।

**इन्दुमती**—सीताजीने कहा—हे महाप्राज्ञ ! और पिताके घर रहते समय पहले ( बचपनमें ) ही ज्यौतिषी ब्राह्मणोंसे मैं यह बात सुनी थी कि–मुझे वनमें निश्चय ही रहना पड़ेगा ( आप महाप्राज्ञ ( त्रिकालवित् ) हैं, सायद आपभी इस बातको जानते होंगे ) ॥

**लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाऽहं वचनं गृहे ।**
**वनवासकृतोत्साहा नित्यमेव महाबल ! ॥ ६ ॥**

**अन्वयः**—हे महाबल ! लक्षणिभ्यः, द्विजातिभ्यः, ( सकाशात् ) गृहे,

वचनं, श्रुत्वा, वनवासकृतोत्साहा, नित्यम्, एव, अहम्, (अस्मि)।

**सुधा**—उक्तमेवार्थं द्रढयति– लक्षणिभ्य इति। हे महाबल = अतुलपराक्रम !, लक्षणिभ्यः = शुभाशुभसूचकलक्षणज्ञातृभ्यः, द्विजातिभ्यः = विप्रेभ्यः, (सकाशात्) गृहे = पितृभवने, वचनं = वनवासबोधकवाक्यं, श्रुत्वा = आकर्ण्य, वनवासकृतोत्साहा = वनवासजनिताध्यवसाया, "उत्साहोऽध्यवसायः स्यात्" इत्यमरः। नित्यम् एव = इतः प्रागपि, अहम् (अस्मी)।

**इन्दुमती**—सीताजीने कहा—हे महाबलवान् वीर राघव! सामुद्रिक शास्त्र जाननेवाले (उन विश्वस्त) दैवज्ञ ब्राह्मणोंके मुखसे अपने पिताके घरमें ही जब मैंने अपने वनवासकी बात सुनी थी तब ही से (उनकी बात सुनकर बचपनसे ही, न कि आजसे) वनजानेका मेरा उत्साह है।

**आदेशो वनवासस्य प्राप्तव्यः स मया किल।**
**सा त्वया सह भर्त्राऽहं यास्यामि प्रिय! नान्यथा॥ १०॥**

**अन्वयः**—सः, वनवासस्य, आदेशः, किल, मया, प्राप्तव्यः, हे प्रिय!, सा अहं, भर्त्रा, त्वया, सह, (वनं) यास्यामि, अन्यथा, न।

**सुधा**—सः = ब्राह्मणोक्तः, वनवासस्य = वननिवासस्य, आदेशः = फलादेशः, किल = निश्चयेन, मया = सीतया, प्राप्तव्यः = भवत्सकाशाल्लब्धव्यः, ललाटलिखितस्यापरित्याज्यत्वादित्याशयः। हे प्रिय = वल्लभ!, सा अहं = एवमादिष्टाऽहं, भर्त्रा = स्वामिना, त्वया = भवता, सह = सार्धं, (वनं) यास्यामि = गमिष्यामि, अन्यथा = केवलं स्वेच्छया, न यास्यामीत्यर्थः, एतेन ब्राह्मणवचनं भवता अन्यथा न विधेयमिति सूचितम्।

**इन्दुमती**—सीताजीने कहा—हे प्रिय आर्यपुत्र! वनवासका (वह जन्म-पत्र लिखित दैवज्ञोंका कहा) आदेश मुझे प्राप्तकरना (भोगना) पड़ेगा और उस तक़दीरमें लिखा हुआ वनवासका भोग-करने वाली मैं आपके साथ वन चलूंगी। इसके विपरीत नहीं होसकता (वह समय आगया है, आप मुझे वन नहीं लेजानेका विफल प्रयत्न मत कीजिये)।

**कृतादेशा भविष्यामि गमिष्यामि त्वया सह।**
**कालश्चायं समुत्पन्नः सत्यवाग् भवतु द्विजः॥ ११॥**

**अन्वयः**—(हे राघव!) कृतादेशा (अहं) भविष्यामि, (अत एव) त्वया, सह, (वनं) गमिष्यामि, अयं, कालश्च, समुत्पन्नः, द्विजः, सत्यवाग्, भवतु।

सुधा—मर्यादापालकत्वेन भवदादेशोऽवश्यं भविष्यतीत्यत आह-कृतादेशेति। (हे राघव!) कृतादेशा = कृतः-दत्तः, आदेशः—आज्ञा, यस्यै सा तथोक्ता, यद्वा-द्विजकृतफलादेशा (अहं) भविष्यामि, (अत एव) त्वया = भवता, सह = साकं, गमिष्यामि=यास्यामि, अयं कालश्च = वनवासकालश्च, समुत्पन्नः=संप्राप्तः, द्विजः = फलादेष्टा ब्राह्मणः, सत्यवाक्=यथार्थवादी, भवतु = अस्तु। "द्विज" इति जातावेकवचनम्। अत्र द्विजपदेन रावणोऽपि ग्राह्यः, तेन यच्छद्मवेषधारिणा तेनोक्तं "लक्ष्मीनिमित्तं त्वत्तो मे वधोऽस्त्वि"ति तत्सत्यं भवत्वित्यपि गूढं सूचितमिति भट्टाः।

इन्दुमती—सीताजीने कहा—हे प्रिय आर्यपुत्र!-आपके साथ मैं वन जाऊंगी और कृतादेशा (जैसा जन्म-पत्र देखकर दैवज्ञोंने कहा था वैसा—वनवासिनी) मैं हो जाऊंगी। हे नाथ! दैवज्ञ ब्राह्मण सत्यवादी हों (उनका कहा भविष्य फल ठीक हो) ऐसा यह समय अब आगया है (आप मुझे वन नहीं जानेका वचन मत दीजिये)।

**वनवासे हि जानामि दुःखानि बहुधा किल।**
**प्राप्यन्ते नियतं वीर! पुरुषैरकृतात्मभिः ॥ १२ ॥**

अन्वयः—वनवासे, बहुधा, दुःखानि (सन्ति इति) किल, जानामि, हि, (तथापि) हे वीर! अकृतात्मभिः, पुरुषैः, (तानि) नियतं, प्राप्यन्ते।

सुधा—एवं तात्त्विकमर्थमभिधाय सम्प्रति लोकानुसारेण बोधयन्ती आह—वनवास इति। (अत्र हिरेवार्थे किलेति निश्चये) वनवासे = अरण्यवासे, बहुधा = नानाविधानि, दुःखानि = क्लेशाः, (सन्ति इति) किल=निश्चयेन, जानामि हि=अवगच्छाम्येव, (तथापि) हे वीर=पराक्रमशालिन्!, अकृतात्मभिः= अजितेन्द्रियैः, पुरुषैः = नरैः, (तानि) नियतं = निश्चित, प्राप्यन्ते = लभ्यन्ते, न तु भवा (मा) दृशैर्जनैरिति भावः। अत्र पुरुषप्रकरणाभावेऽपि तदुक्तिस्त्वयाऽपि सा बुद्धिर्वनवासदुःखं दृष्ट्वा न निवर्त्तनीयेति सूचयितुम्।

इन्दुमती—(सीताजीने कहा-हे वीर आर्यपुत्र! आपने जो पहले कहा कि वनवासमें अमुक २ कष्ट होते हैं वह) मैं जानती हूँ कि निश्चय ही वनवासमें बड़े बड़े कष्ट होते हैं किन्तु मैं यह भी निश्चित जानती हूं कि यह कष्ट वे ही पाते हैं जो कायर हैं (न कि आपके ऐसे जितेन्द्रिय वीर पुरुष और न उनके साथ उनकी वीरपत्नी)।

**कन्यया च पितुर्गेहे वनवासः श्रुतो मया।**

भिक्षिण्याः शमवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥

अन्वयः—पितुः, गेहे, मम, मातुः, अग्रतः, शमवृत्तायाः, भिक्षिण्याः, कन्यया, च, मया, वनवासः ( भावी इति ) श्रुतः।

सुधा—"सिंहावलोकन" न्यायेन स्वगमने प्रमाणान्तरमपि दर्शयति—कन्ययेति। ( अत्र चकारोऽव्यर्थकः' 'इहे'त्यस्याग्रिमश्लोकेऽन्वयः )। पितुः= मिथिलेशस्य, गेहे=भवने, मम, मातुः=जनन्याः, अग्रतः=समक्षतः, शमवृत्तायाः= शमादिसंपन्नायाः, भिक्षिण्याः = तापस्याः, कन्यया = पुत्र्या, मया=सीतया वन- वासः=अरण्यवासः, ( भावी इति ) श्रुतः = आकर्णितः "शमवृत्तायाः" इत्यनेन तत्कन्योक्तमन्यथा न भवितेति ध्वनितम्।

इन्दुमती—( सीताजीने कहा—हे आर्य पुत्र ! मेरा वन जाना निश्चत है क्योंकि-) जब मैं बचपनमें अपने पिता महाराज मिथिलेशके घरमें रहती थी, तभी मैंने माताके सामने एक बाल ब्रह्मचारिणी साध्वी तपस्विनी कन्याके मुखसे भी अपने इस वनवासकी बात सुनी थी ॥

प्रसादितश्च वै पूर्वं त्वं मे बहुतिथं प्रभो ! ।
गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥

अन्वयः—हे प्रभो !, च, इह, पूर्वं, त्वं, मे, बहुतिथं, वनवासस्य, गमनं, ( प्रति ) प्रसादितः, वै, ( अतः ) हि, त्वया, सह, ( गमनं मे ) काङ्क्षितम्, ( इति जानीहि )

सुधा—पूर्वकालिकोदन्तं गमने सहायमाह—**प्रसादित** इति। "इह" इत्य-नुपदोक्तपद्यस्थमानेतव्यम्, एवकारार्थे वै इति ( हि निश्चये )। हे प्रभो=स्वामिन्! च=तथा, इह=अस्मिन् गृहे, पूर्वे=पूर्वस्मिन् काले, त्वं=भवान्, मे=मया सीतया, बहुतिथम्=अनेकवारं, वनवासस्य=अरण्यवासस्य, गमनं=लीलार्थे जाह्न- वीतीरतपोवनादिगमनं (प्रति) प्रसादितो वै=प्रार्थित एव, (अतः) हि=निश्चयेन, त्वया=भवता, सह=साकं,(गमनं मे) काङ्क्षितम्=अभिलषितम्, (इति जानी=हि)

( सीताजीने पुनः कहा—मेरे वन-गमनमें आपका प्रस्तुत वनगमन असाधारण कारण नहीं है, प्रत्युत निमित्त मात्र है। क्योंकि—) हे प्रभो! इसके पहले भी कितने दिन वन–विहार करनेके लिये मैं आपसे वनजानेकी प्रार्थना कर चुकी हूं। अतः हे स्वामिन्! आपके साथ वनजानेकी मेरी अभिलाषा ( नयी नहीं ) है ॥

कृतत्त्वणाऽहं भद्रं ते गमनं प्रति राघव !।
वनवासस्य शूरस्य मम चर्या हि रोचते ॥ १५ ॥

**अन्वयः**—हे राघव !, ते, भद्रम् , ( अस्तु ) अहं, गमनं, प्रति, कृतत्त्वणा, ( अस्मि ) हि, वनवासस्य, शूरस्य, चर्या, मम, रोचते।

**सुधा**—हे राघव = राम !, ते = तव, भद्रं=कल्याणम् , ( अस्तु ) अहं, गमनं = वनगमनं, प्रति, कृतत्त्वणा=जातोत्सवा "अस्मि" "निर्व्यापारस्थितौ। कालविशेषोत्सवयोः क्षणः" इत्यमरः, हि=यतः, वनवासस्य=वने वासो यस्य तस्य तथोक्तस्य वननिवासिन इत्यर्थः। शूरस्य = वीरस्य, चर्या=शुश्रूषा, मम रोचते = मह्यं रोचते। यद्वा-तादृशस्य, तव चर्या-रक्षोवधादिरूपा, मम रोचते मत्संबन्धेनैव शोभते संपद्यत इत्यर्थ इति **भट्टाः**।

**इन्दुमती**—( सीताजीने कहा-) हे राघव ! आपके वनगमन प्रति (से) ( विश्वका ) कल्याण हो। हे राघव ! मुझे भी यह ( जिसके लिये मैं पहले भी प्रार्थना करती थी वह) समय प्राप्त हो गया है (अपने साथ मुझे लेते चलिये)। हे राघव ! वनमें आपके ऐसे अपने वीर पतिकी सेवा करना मुझे बहुत पसन्दहै।

शुद्धात्मन् ! प्रेमभावाद्धि भविष्यामि विकल्मषा।
भर्त्तारमनुगच्छन्ती भर्त्ता हि मम दैवतम् ॥ १६ ॥

**अन्वयः**—हे शुद्धात्मन् ! प्रेमभावात् , हि, भर्त्तारम् , अनुगच्छन्ती, विकल्मषा, भविष्यामि, हि भर्त्ता, मम, दैवतम्।

**सुधा**—अत्र "हि" शब्दः प्रसिद्धौ ज्ञेयः। हे शुद्धात्मन्=स्वच्छान्तःकरण!, प्रेमभावात्=ईर्ष्यादिरहितस्नेहस्वभावात् , हि, भर्त्तारं = स्वामिनम् अनुगच्छन्ती=अनुयान्ती, विकल्मषा = हतपापा, भविष्यामि, त्वया विनात्रस्थितौ हि लोकः कल्मषं संभावयिष्यतीति भावः। नचात्रैव स्थित्वा कुलदेवतामाराध्य विशुद्धा भवेत्यत्राह-**भर्त्तेति**। हि=यतः, भर्त्ता=पतिः, मम, दैवतं=देवता "वर्त्तते" इति शेषः।

**इन्दुमती**—(सीताजीने कहा-) हे शुद्धान्तःकरण प्रभो ! यह निश्चय है कि प्रेमभावसे (पातिव्रतधर्मानुकूल आचरणसे) आपका अनुगमन करती हुई (सुख-दुःखमें समान भावसे सेवा करती हुई ) मैं पाप रहित हो जाऊँगी क्योंकि स्वामी ही मेरे ( स्त्रीके लिये ) देवता हैं।

प्रेत्यभावेऽपि कल्याणः सगमो मे सह त्वया ॥ १७ ॥

**अन्वयः**—( हे शुद्धात्मन् ! ), प्रेत्यभावेऽपि, त्वया, सह, मे, संगमः, कल्याणः, ( भविष्यति )।

**सुधा**—ननु विलक्षणो निरवच्छिन्नसम्बन्धः किमर्थं प्रार्थ्यत इत्यत आह—**प्रेत्येति**। (हे शुद्धात्मन् ! ) प्रेत्यभावेऽपि = मृत्वा शरीरान्तरपरिग्रहेऽपि, त्वया= भवता, सह, मे=मम, संगमः=संयोगः, कल्याणः=शोभनः, दिव्यसुखहेतुरित्यर्थः । अत इह संगमस्य कल्याणत्वं "कैमुतिक" न्यायसिद्धमिति भावः ।

**इन्दुमती**—(सीताजीने पुनः कहा—हे प्रभो ! यदि इस तरह सची पति-सेवा मैने की तो इसलोकमें ही क्या ? ) मरनेके बाद परलोकमें भी आपके साथ मेरा पुनः सुन्दर मिलन होगा ।

**श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ।**
**इहलोके च पितृभिर्या स्त्री यस्य महामते ।।**
**अद्भिर्दत्त स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८ ॥**

**अन्वयः**—हि, यशस्विनां, ब्राह्मणानां, ( मुखात् ) पुण्या, श्रुतिः, श्रूयते। हे महामते !, यस्य, या, स्त्री, पितृभिः, अद्भिः, स्वधर्मेण, दत्ता, सा, इहलोके, ( तस्य संयोगं लभते ) तस्य प्रेत्यभावे, अपि, ( संयोगं लभते )।

**सुधा**—प्रेत्यसङ्गमसद्भावे प्रमाणमाह—**श्रुतिर्हीत्यादिना** । अत्र पितृभिरिति बहुवचनं पितामहाद्यपेक्षया। चो भिन्नक्रम एवकारार्थे । **व्याख्या**—हि=यतः, यशस्विनां = कीर्त्तिमतां, ब्राह्मणानां=विप्राणां, ( मुखात् ) पुण्या = सुकृतिजनिका, श्रुतिः=उक्तार्थप्रतिपादक आम्नायः, श्रूयते=आकर्ण्यते। तां श्रुतिं पठति-**इहेति** । हे महामते=महाबुद्धिशालिन् !, यस्य=पुरुषस्य यस्मै पुरुषायेत्यर्थः, या स्त्री=या कन्या, पितृभिः=पितृपितामहमात्रादिभिः, अद्भिः = जलैः, स्वधर्मेण=स्वस्वजातीयकन्यादानधर्मेण, दत्ता=अर्पिता, सा=स्त्री, इहलोके=अस्मिन् संसारे, (तस्य संयोगं लभते) तस्य च = तस्यैव, प्रेत्यभावे अपि=परलोकेऽपि ( संयोगं लभते )।

**इन्दुमती**—(सीताजीने कहा-) हे महामते ! मैंने यशस्वी ब्राह्मणोंके मुखसे यह पवित्र वाणी सुनी है कि-इसलोकमें स्व स्व वर्णधर्मानुकूल विवाह विधिसे हाथमें जल लेकर मंत्रोच्चारण करके पिता अपनी कन्याका दान जिस पुरुषको देता है मरनेके बाद परलोकमें भी वही स्त्री उस पुरुषकी पुनः होती है ।

**एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम् ।**
**नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ १९ ॥**

**अन्वयः**—एवं, हि, इह, पतिव्रतां, सुवृत्तां, स्वकां, नारीं, मां, त्वम्, अस्मात्, नेतुं, केन, हेतुना, न, अभिरोचयसे ( तं वद )

**सुधा**—एवं = पूर्वोक्तश्रुतिरूपप्रबलप्रमाणसद्भावेऽपि, हि, इह = संसारे, पतिव्रताम् = पतिधर्मपरायणाम्, सुवृत्तां = शोभनवृत्तान्तविज्ञापनकर्त्रीं, स्वकां=स्वीयां, नारीं=पत्नीं, मां=सीतां, त्वम्, अस्मात्=अयोध्यानगरात्, यद्वा-अद्भिदानात्, नेतुं = वनं प्रापयितुं, केन, हेतुना = कारणेन, न अभिरोचयसे=नेच्छसि (तं वद) ।

**इन्दुमती**—( सीताजीने कहा— ) हे महामते ! जब ऐसा है ( परलोकमें भी पतिव्रता स्त्री अपने पतिको नहीं छोड़ती ) तब अपनी सदाचारिणी पतिव्रता स्त्री मुझ ( सीता ) को किस कारण आप अपने साथ (वन) लेजाना पसन्द नहीं करते ? ।

**भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।**
**नेतुमर्हसि काकुत्स्थ ! समानसुखदुःखिनीम् ॥ २० ॥**

**अन्वयः**—हे काकुत्स्थ ! भक्तां, पतिव्रतां, दीनां, सुखदुःखयोः, समां, समानसुखदुःखिनीं, मां ( वनं ) नेतुम्, अर्हसि ।

**सुधा**—हे काकुत्स्थ = ककुत्स्थवंशोद्भव !, भक्तां = त्वत्प्रीत्यनुकूलव्यापारवतीं, पतिव्रताम्=पतिधर्मपरायणाम्, दीनां = दयनीयां, सुखदुःखयोः समां = प्राप्तयोः सुखदुःखयोरेकरूपां, समानसुखदुःखिनीं = त्वत्तुल्यसुखदुःखां, मां, (वनं) नेतुं = प्रापयितुम्, अर्हसि=शक्नोसि ।

**इन्दुमती**—( सीताजीने कहा—मुझमें कोई अवगुण नहीं है ) हे नाथ ! मैं आपमें भक्ति-श्रद्धा रखने वाली दयाके पात्र हूँ, आपके सुखसे सुखी एवं आपके दुःखसे दुःखी रहने वाली पतिव्रता स्त्री हूँ तथा ( यह भी नहीं है कि मैं वनका कष्ट बरदास्त नहीं करूंगी ) मेरे लिये सुख-दुःख समान है । अतः हे काकुत्स्थ ! मैं वन लेजाने योग्य हूँ ।

**यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि ।**
**विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २१ ॥**

अन्वयः—एवं, दुःखितां, मां, यदि, वनं, नेतुं, न, च, इच्छसि, ( तदा ) मृत्युकारणात्, विषम्, अग्निं. जलं, वा, अहम्, आस्थास्ये ।

सुधा—एवम्=अनेन प्रकारेण, दुःखितां=पीडितां, माम्=आत्मजायां, यदि=चेत्, वनं=महारण्यं, नेतुं=प्रापयितुं, न च इच्छसि=नचाऽभिलषसि ( तदा ) मृत्युकारणात्=मृत्युसदृशदुःखहेतोः, विषं=गरलम्, अग्निं=वह्निं, जलं=सलिलं वा, अहम्, आस्थास्ये=तत्तद् भक्षणादिनिश्चयं करिष्ये, विषभक्षणादिजनितपीड़या विरहक्लेशाल्पता भवितेत्याशयः ।

इन्दुमती—( अन्तमें सीताजीने कहा—हे नाथ ! मुझमें कोई अवगुण नहीं है ) यदि आप मुझ दुःखिनी सीताको अपने साथ वन नहीं लेचलेंगे तो मुझे मृत्युके समान कष्ट होगा अतः मैं विष खाकर या अग्निमें जलकर अथवा पानीमें डूबकर प्राण दे दूंगी ।

**एवं बहुविधं तं सा याचते गमनं प्रति ।**
**नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥**

अन्वयः—एवं, बहुविधं, तं, गमनं, प्रति, सा, याचते, ( किन्तु ) महाबाहुः, विजनं, वनं, तां, नेतुं, न, अनुमेने ।

सुधा—एवम्=उक्तप्रकारेण, बहुविधम्=अनेकप्रकारं, तं=प्राणवल्लभं, गमनं=वनगमनं, प्रति, सा=सीता, याचते=प्रार्थयति ( किन्तु ) महाबाहुः=आजानुबाहुः रामः, विजनं=श्वश्रूप्रभृतिरक्षकजनरहितं, वनं=महारण्यं, तां=सीतां नेतुं=प्रापयितुं, न अनुमेने=न स्वीचकार ।

इन्दुमती—( महर्षि वाल्मीकिजी कहते हैं— ) इस प्रकार सीताजीने अपने साथ वन लेजानेके लिये श्रीरामचन्द्रजीसे बहुत प्रार्थना की परन्तु श्रीरामचन्द्रजी उनको उस निर्जन दण्डकारण्य वनमें लेजानेको राजी नहीं हुए ( सीताजीके वचनोंका कुछ भी उत्तर नहीं दिये ) ।

**एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।**
**स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥**

अन्वयः—एवम्, उक्ता, तु, चिन्तां, समुपागता, सा, मैथिली, नयनच्युतैः, उष्णैः, अश्रुभिः, गां, स्नापयन्ती, इव, ( तस्थौ )

सुधा—एवम्=अननुमतिबोधकवाक्यम्, उक्ता=अभिहिता, तु, चिन्तां=मां सह नेष्यति नवेति संदेहं, समुपागता=प्राप्ता, सा=प्रसिद्धा, मैथिली=मिथि-

क्लेशप्लुता सीता, नयनच्युतैः=लोचनस्यन्दितैः, उष्णैः=तप्तैः, अश्रुभिः=जलैः, गां=भुवं, स्नापयन्ती इव=स्नानं कारयन्ती इव (तस्थौ)।

**इन्दुमती**—( वाल्मीकिजी पुनः कहते हैं— ) एवं प्रकारेण श्रीरामचन्द्रजीके अनभिमत वचन कहनेपर ( उनको असम्मत देखकर ) सीताजी अत्यन्त चिन्तित हुई ( रोने लगीं ) और अपनी आँखोंकी संतत अश्रुधारासे पृथिवीको तर करने लगीं।

**चिन्तयन्तीं तदा तां तु निवर्त्तयितुमात्मवान्।**
**क्रोधाविष्टां तु वैदेहीं काकुत्स्थो बह्वसान्त्वयत् ॥ २७ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे
एकोनत्रिंशः सर्गः समाप्तः।

---

**अन्वयः**—आत्मवान्, काकुत्स्थः, तदा, क्रोधाविष्टां, चिन्तयन्तीं, तां, वैदेहीं, तु, निवर्त्तयितुं, बहु, असान्त्वयत्।

**सुधा**—आत्मवान्=

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते ॥

इत्युक्तलक्षणवान्, **यद्वा**-जीवादिनियन्ता, काकुत्स्थः=राघवः, तदा=तस्मिन् काले, क्रोधाविष्टां=प्रणयकोपयुक्तां, चिन्तयन्तीं=सहगमनोपाय विचारयन्तीं, तां, वैदेहीं=जनकात्मजां, तु, निवर्त्तयितुं=कोपं दूरीकर्त्तुं, वनगमनाय मनः प्रत्यावर्त्तयितुं वा, बहु=अनेकप्रकारं ( यथा स्यात्तथा ) असान्त्वयत्=सान्त्ववचनान्यब्रवीदित्यर्थः।

इति श्री वाल्मीकीयरामायणे अयोध्याकाण्डे "सुधा"
टीकायामेकोनत्रिंशः सर्गः समाप्तः।

---

**इन्दुमती**—जब रामचन्द्रजीने देखा कि सीताजी बहुत चिन्तित हो गयीं हैं तथा मारे क्रोधके उनके ओंठ लाल लाल हो गये हैं तब उन्होंने सीताजीको बहुत समझाया, जिससे वे उनके साथ बन न जाँय।

**इस प्रकार अयोध्याकाण्डका इन्दुमती टीकामें उन्तीसवाँ सर्ग समाप्त हुआ।**

---

# त्रिंशः सर्गः

## पतिव्रता सीता

सान्त्वमाना तु रामेण मैथिली जनकात्मजा ।
वनवासनिमित्तार्थं भर्त्तारमिदमब्रवीत् ॥ १ ॥

**अन्वयः**—रामेण, सान्त्वमाना, तु, जनकात्मजा, मैथिली, वनवासनिमित्तार्थम्, भर्त्तारम्, इदम्, ( वचनम् ) अब्रवीत् ।

**सुधा**—सीतावृत्तं वर्णयितुमुपक्रमते—**सान्त्वमाने**ति । अत्राप्यर्थे त्विति ।

**व्याख्या**—रामेण=स्ववल्लभेन, सान्त्वमाना तु=विविधवचोभिराश्वास्यमानाऽपि, जनकात्मजा=मिथिलेशसुता, मैथिली=सीता, वनवासनिमित्तार्थं = वनवासहेत्वनुमतिसिद्ध्यर्थं, भर्त्तारं=स्वामिनम्, इदं=वक्ष्यमाणं ( वचनम् ) अब्रवीत्= अवोचत् । जनकात्मजेति विशेषणं स्वकुलोचिताचारदार्ढ्याय ।

**इन्दुमती**—( महर्षि बाल्मीकिजी कहते हैं कि मारे क्रोधके लाल२ ओंठ किये देख कर भी ) जब श्रीरामचन्द्रजी महाराज जनककी कन्या (आदि शक्ति) मैथिली सीताजीको (पुनः) सान्त्वना देने लगे (जलेपर नमक छिड़कने लगे) तब ( सीताजीकी क्रोधाग्नि और भी भभक उठी ) उन्होने अपने पति रामचन्द्रजीसे वनवासके लिये ( पुनः ) इस प्रकारसे कहा ।

सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥

**अन्वयः**—उत्तमसंविग्ना, सा, सीता, विपुलवक्षसं, तं, राघवं, प्रणयात्, च, अभिमानात्, च, परिचिक्षेप ।

**सुधा**—वचनस्य विशेषस्वरूपं प्रतिपादयन्नाह-**सेति** । उत्तमसंविग्ना=विरहहेतुकात्युद्वेगं प्राप्ता, सा=जगत्प्रसिद्धा, सीता=मैथिली, विपुलवक्षसं=विपुलं स्थूलं वक्ष उरो यस्य तं तथोक्तं पीवरोरःस्थलमित्यर्थः, तं=जगत्प्रसिद्धं, राघवं= रामं, प्रणयात्=स्नेहात्, च=पुनः अभिमानात्=अहमस्यानन्येति मां त्यक्तुमयमसमर्थ इत्यहङ्काराच्च, परिचिक्षेप=सोपहासवचनमुच्चारयामास निनिन्देत्यर्थः ।

**इन्दुमती**—( बाल्मीकिजी कहते हैं कि पुनः इस वारकी प्रार्थनाको अस्वीकार करते देख ) सीताजी उद्विग्न होकर मारे क्रोधके कांपती हुई विशाल वक्षःस्थल वाले महापराक्रमी श्रीरामचन्द्रजीको ( निडर होकर ) प्रेम और अभिमानके

साथ उपहास पूर्ण शब्दोंमें कहने लगीं ( उनकी खिल्ली उड़ाने लगीं )।

**किं त्वा मन्यत वैदेहः पिता मे मिथिलाधिपः।**
**राम ! जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥**

**अन्वयः**—हे राम !, वैदेहः, मिथिलाधिपः, मे, पिता, पुरुषविग्रहं, स्त्रियं, जामातरं, त्वा, प्राप्य, किम्, अमन्यत।

**सुधा**—हे राम=सौन्दर्यमात्रेण परिभ्रामक राघव !, वैदेहः=विदेह कुलोत्पन्नः "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति कर्मप्रधानतया कदाचिदपि पत्नीविरहमसहमान इत्यर्थः, मिथिलाधिपः=मिथिलाजनपदस्य सम्यग्रक्षकः, मे=मम, पिता=जनकः, पुरुषविग्रहं=बहिःपुरुषवेषं, स्त्रियम्=अन्तःस्त्रीस्वभावं, जामातरं=दुहितुः पतिं, "जामाता दुहितुः पतिः" इत्यमरः, त्वा=त्वां, प्राप्य=लब्ध्वा, किम्, अमन्यत=अवबुध्यत ? तव तत्त्वं न ज्ञातवानित्यर्थः। मां परित्यज्य वनं गतं त्वां यदि पिता मे शृणुयात्तदा त्वां स्त्र्येव काचित्पुरुषवेषं धृत्वा मत्कन्यामुपयेम इत्यवश्यं तस्य हृदि स्यात् किन्तु पूर्वं यद्येवं निश्चितं स्यात्ततः मां तुभ्यं न प्रयच्छेदित्याशयः। एतेन पितुर्भ्रमः सूचितः। त्वेति त्वामित्यर्थेऽर्षः।

**इन्दुमती**—( सीताजीने कहा— ) हे राम ! यदि मेरे पिता मिथिलेश राजर्षि महाराज जनक यह जानते कि, आप स्वरूप मात्रके पुरुष हैं और क्रिया आपकी स्त्री-सी ( डरपोक ) है तो कभी भी वे आपको अपना दामाद ( मेरे भाग्य विधाता ) नहीं बनाते ( अर्थात् 'अतो दुःखतरं वनम्' कह कर मुझे वन नहीं लेजाना आप जैसे वीर योद्धाको शोभा नहीं देता )।

**अनृतं बत ? लोकोऽयमज्ञानाद्यदि वक्ष्यति।**
**तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥**

**अन्वयः**—यदि ( मां त्यक्त्वा भवान् वनगमनभारं ) वक्ष्यति ( तदा ) बत ! अयं, लोकः, तपति, दिवाकरे, इव, रामे, परं, तेजः, नास्ति, ( इति यद् ) वक्ष्यति ( तद् ) अज्ञानाद् ( इव ) अनृतम्।

**सुधा**—न केवलं मत्पितुरेव भ्रमः, एवं भवद्वाक्यश्रवणे सर्वेषां भ्रान्तिः स्फुटीभविष्यतीति प्रतिपादयन्ती आह—**अनृत**मिति। यदि=चेत् ( मां त्यक्त्वा भवान् वनगमनभारं ) वक्ष्यति=प्राप्स्यति ( तदा ) बतेति खेदे "खेदानुकम्पासन्तषविस्मयामन्त्रणे बत" इत्यमरः। अयं लोकः=संसारिजनः, तपति=

सन्तपति, दिवाकरे = सूर्ये, इव, रामे, परम् = उत्कृष्टं, तेजः=दीप्तिः प्रभावो वा, "तेजः प्रभावे दीप्तौ च" इत्यमरः, नास्ति = न विद्यते, (इति यद्) वक्ष्यति वदिष्यति (तद्) अज्ञानादिव = अबोधादिव, अनृतम = असत्यं भविष्यतीति शेषः। एतादृक् पराक्रमयुक्तोऽपि यदि मां विहाय गमिष्यति तर्हि सूर्यसदृशं तेजःस्विनं भवन्तं निस्तेजोऽयं राम इति मिथ्यैव लोकः कथयिष्यतीति भावः।

"वक्ष्यती"ति वह प्रापणे, वच परिभाषणे, इत्यनयोः रूपम्, एकत्र लृट् अपरत्रानद्यतनत्वादेरविवक्षा।

इन्दुमती—सीताजीने पुनः कहा— हे राम! (यदि वनमें आप मेरी रक्षा नहीं कर सकते तो निश्चय) आप निस्तेज पुरुष हैं, फिर भी यदि संसार आपको सूर्यके समान अत्यन्त तेजस्वी कहेगा तो खेद है कि वह अज्ञान वश मिथ्या कहेगा।

**किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते।**
**यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥**

**अन्वयः**—त्वं, किं, हि, कृत्वा, विषण्णः, वा, ते, कुतः, भयम्, अस्ति, यत्, अनन्यपरायणां, मां, त्वं, परित्यक्तुकामः, "असि"।

**सुधा**—ननु गमनाभावकारणं त्वयैवाभिधाय लोको बोद्धव्य इत्यत आह—किमिति। त्वं, किं हि कृत्वा = त्वं किं मनसि विचार्य, विषण्णः = खिन्नः, "अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्" इत्युक्तावश्यभरणीयविषये विषादप्राप्तिर्नोचितेति भावः। वा = अथवा, ते = तव कालाग्निसदृशक्रोधस्येत्यर्थः, कुतः = कस्मात्, भयं = त्रासः, अस्ति = विद्यते, यत् = यस्मात् कारणात्, अनन्यपरायणां = नास्ति अन्यः-त्वदतिरिक्तः, परायणः-गतिर्यस्याः सा तां तथोक्तां, मां = प्राणवल्लभां, परित्यक्तुकामः = परित्यागेच्छुकः, "असि" इति शेषः। तथा च परित्यागे कारणमहमेव न वेद्मीति लोकान् कथं बोधयिष्यामीति भावः।

इन्दुमती—(सीताजीने कहा—) हे राम! क्या विचार कर (मैने आपका क्या किया (बिगाड़ा) है जो) आप उदास हो रहे हैं अथवा किससे (राजा भरतसे तो नहीं) आप डर रहें हैं जो मुझ जैसी अपनी अनन्य भक्ता प्यारी पत्नीको यहां छोड़कर, वन जाना चाहते हैं।

**द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम्।**
**सावित्रीमिव मां विद्धि त्वमात्मवशवर्त्तिनीम् ॥ ६ ॥**

**अन्वयः**—द्युमत्सेनसुतं, वीरं, सत्यवन्तम् , अनुव्रतां, सावित्रीम्, इव,माम् , आत्मवशवर्त्तिनीं, त्वं, विद्धि ।

**सुधा**—नाऽहं परित्यागयोग्येति बोधयन्ती आह—द्युमदिति । द्युमत्सेनसुतं = द्युमत्सेनपुत्रं, वीरं = पराक्रमवन्तं, सत्यवन्तम् = "सत्यवान्" इति नामानम् , अनुव्रतां=तद्वशवर्त्तिनीं, सावित्रीम् = अश्वपतिपुत्रीम् , इव, मां = सीताम् , आत्मवशवर्त्तिनीं = स्ववशवर्त्तिनीं, विद्धि = जानीहि । तथा च सावित्री यथा पतिं विना न जिजीविषुरासीत्तथाऽहमपीत्यवश्यं मामपि नयेति भावः ।

**इन्दुमती**—हे राम ! द्युमत्सेनके पुत्र वीर सत्यवान्‌का अनुव्रजन करनेवाली सती सावित्रीकी तरह मुझे भी आप अपने वशमें समझिये (अर्थात् जैसे सावित्री अपने पतिके पीछे २ वन गयी थी वैसे मैं भी आपके पीछे २ वन चलूंगी। अथवा यदि एक साधारण-सा राजा द्युमत्सेनका पुत्र सत्यवान् अपनी स्त्रीको वन लेजानेमें समर्थ हुआ तो महापराक्रमी सूर्यवंशी महाराज दशरथके पुत्र होकर आप वनमें मेरी (सीताकी) रक्षा नहीं कर सकते ? धिक्कार है आपको)।

**न त्वहं मनसाऽप्यन्यं द्रष्टाऽस्मि त्वदृतेऽनघ ! ।**
**त्वया राघव ! गच्छेयं यथान्या कुलपांसनी ॥ ७ ॥**

**अन्वयः**—हे अनघ ! यथा, अन्या, कुलपांसनी, अन्यं, ( पश्यति, तथा ) मनसा, अपि, त्वद् , ऋते, अन्यम् , अहं, न द्रष्टा, अस्मि, ( अतः ) तु, हे राघव !, त्वया, ( वनं ) गच्छेयम् ।

**सुधा**—हे अनघ = निष्पाप !, यथा=येन प्रकारेण, अन्या कुलपांसिनी= अन्या कुलटा स्त्री, अन्यं=परपुरुषं ( पश्यति ) रमणायेति शेषः, ( तथा ) मनसा अपि = हृदयेनाऽपि किं पुनः शरीरचेष्टया, त्वद् ऋते = त्वद्विना, अन्यं= परपुरुषं, न द्रष्टा अस्मि = नाऽवलोकिताऽस्मि, (अतः) तु=निश्चयेन, हे राघव = राम !, त्वया = भवता, सह ( वनं ) गच्छेयं = व्रजेयम् ।

**इन्दुमती**—हे राघव ! जैसी कुलटा स्त्री परपुरुषरत होती है वैसी ही मुझे मत समझिये । हे अनघ ! ( निष्पाप ) मैंने आपको छोड़कर परपुरुषको देखनेकी कल्पना भी मनमें कभी नहीं की अतः मैं ( सीता ) आपके साथ ही (वन) चलूंगी ( परपुरुष भरतके पास मुझे मत छोड़िये ) ।

**स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।**
**शैलूष इव मां राम ! परेभ्यो दातुमिच्छसि ? ॥ ८ ॥**

अन्वयः—हे राम ! चिरम् , अध्युषितां, कौमारीं, भार्यां, ( तथा ) सतीं, मां, शैलूष, इव, परेभ्यः, स्वयं, दातुम् , तु, इच्छसि, ।

सुधा—एवं दृढ्पातिव्रत्यप्रदर्शनेऽपि वनगमनाऽननुमतिमेव ज्ञात्वा पुनराक्षिपति—स्वयमिति । अत्र तु किमर्थे । हे राम = राघव !, चिरं = बहुकालम् , अध्युषितां=स्वसमीपवर्त्तिनीं, कौमारीं=कुमारभावापन्नां, भार्यां = पत्नीं, ( तथा ) सतीं=साध्वीं पतिव्रतामित्यर्थः, मां = सीतां, शैलूष इव = जायाजीवा इव, नटा इवेत्यर्थः "शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः" इत्यमरः । परेभ्यः=स्वातिरिक्तेभ्यः, भरतादिभ्य इत्यर्थः। स्वयम्=आत्मनैव, दातुं=तत्सन्निधौ स्थापयितुम् , तु = किमर्थमिच्छसि=वाञ्छसि ।

इन्दुमती—हे राम ! कौमारावस्था ( १० वर्षकी बाल्यावस्था ) में ही विवाहित होकर चिर दिनोंसे आपके पासमें रहनेवाली अपनी सती भार्या ( मुझ सीता ) को नटकी तरह अपनेसे भिन्न पुरुष ( भरत ) के पास छोड़ना आप क्यों चाहते हैं ? ।

यस्य पथ्यं च रामात्थ यस्य चार्थेऽवरुध्यसे ।
त्वं तस्य भव वश्यश्च, विधेयश्च सदाऽनघ ! ॥ ९ ॥

अन्वयः—हे राम !, यस्य, पथ्यं, च, ( माम् ) आत्थ, यस्य, च, अर्थे, ( माम् ) अवरुध्यसे, हे अनघ !, सदा, तस्य, त्वं, वश्यः, च, विधेयः, च, भव ।

सुधा—पूर्वं "तस्मै दत्तं नृपतिना" इत्यादिना भरतानुकूल्येन स्थितिरुक्ता सम्प्रति तत्परिहारमाह—यस्येति । हे राम=रघुकुलमणे !, यस्य=भरतस्य, पथ्यं= हितं, च, ( माम् ) आत्थ = ब्रवीषि, यस्य = भरतस्य, च अर्थे=प्रयोजनार्थे (माम्) अवरुध्यसे = निवारयसि । यद्वा-यस्य चार्थे=अभिषेकरूपप्रयोजननिमित्ते, अवरुध्यसे=निगृहीतोऽसि, हे अनघ=निष्पाप !, सदा=सर्वस्मिन् काले, तस्य=भरतस्य, त्वं, वश्यः = अनुकूलः, च = पुनः, विधेयः = प्रेष्यश्च, भव, नाहं तदनुकूला तद्विधेया चेह वसिष्यामीत्यभिप्रायः । यद्वा-"माता च मम कौशल्या" इत्यादिना मातरं शुश्रूषस्वेति यदुक्तं तत्परिहारमपि-यस्येति । यस्य = मातृजनस्य, पथ्यमित्यादि पूर्ववदेव व्याख्येयम् , तथा चाहं तु त्वामनुयास्यामीति तदाशयः । अथवा यस्य = मद्रूपजनस्य पथ्यं चात्थ, एतावत्पर्यन्तं यस्य चार्थे, अवरुध्यसे=क्लिश्यसि तस्य = जनस्य, त्वं वश्यो विधेयश्च भव त्वमेव मद्वचनं शृणिवत्यर्थः ।

इन्दुमती—हे निष्पाप राम ! जिसका हित आप चाहते हैं और जिसके

कारण मुझे वन नहीं लेजाना चाहते अथवा जिसके कारण आपके राज्याभिषेकमें बाधा पड़ी है उस ( भरत ) के वशमें और उसका आज्ञाकारी आप ही बनें। मैं ( सीता ) उसके वशमें होना अथवा उसकी दासी बनकर रहना नहीं चाहती।

**स मामनादाय वनं न त्वं प्रस्थितुमर्हसि ।**
**तपो वा यदि वाऽरण्यं स्वर्गो वा स्यात्त्वया सह ॥ १० ॥**

**अन्वयः**—( हे राम ! ) सः, त्वं, माम् , अनादाय, वनं, प्रस्थितुं, न, अर्हसि, यदि, तपः, वा, अरण्यं, वा, स्वर्गः, वा, स्यात् , (तर्हि) त्वया, सह, (एव)।

**सुधा**—( हे राम ! ) सः = प्रसिद्धः, त्वं, मां = प्राणवल्लभाम् , अनादाय= अगृहीत्वा, वनं = महारण्यं, प्रस्थितुं = गन्तुं, न अर्हसि = न शक्नोषि, तत्र हेतुमाह— **तपो** वेत्यादि। यदि = चेत् , तपः = पञ्चाग्न्यादिसाधनं चान्द्रायणादिकं वा = अथवा, अरण्यं=महावनं, वा = अथवा, स्वर्गः = देवलोकः, स्यात् = भवेत् , (तर्हि) त्वया = भवता, सह = साकम् ( एव )।

**इन्दुमती**—( सीताजीने कहा- ) हे नाथ ! जिस (भरत) के कारण आपका वनवास हुआ है, उसीके आश्रित ) मुझे छोड़कर आप वन चले जांय यह उचित नहीं है ( और न मैं ऐसा मान सकती हूँ अतः हे नाथ ! ) आपको अपने साथ ही मुझे वन लेजाना चाहिये। क्योंकि चाहे आप वनमें-तपस्या करें ( चित्त-वृत्ति निरोधकर योग-साधन करें ), चाहें वन-वास करें ( भिल्ल और किरातकी तरह रहें ), चाहें स्वर्ग-वास करें ( वहां पर भी राजकीय सुखसे रहें ) मुझे आपके साथ ही रहना उचित है।

**न च मे भविता तत्र कश्चित्पथि परिश्रमः ।**
**पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥**

**अन्वयः**—तत्र, पथि, तव, पृष्ठतः, गच्छन्त्याः, विहारशयनेषु, इव, मे, कश्चित् , परिश्रमः, न, च, भविता।

**सुधा**—तत्र पथि = तस्मिन्महावनमार्गे, तव=भवतः, पृष्ठतः=पश्चाद्भागात्, गच्छन्त्याः = यान्त्याः, विहारशयनेषु=विहारः-परिक्रम उद्यानसञ्चार इति यावत् "विहारस्तु परिक्रमः" इत्यमरः। तत्र शयनेषु-स्वापेषु इव, मे = मम सीतायाः, कश्चित् = कोऽपि, परिश्रमः = खेदः, न च = नहि, भविता = सम्पत्स्यते।

**इन्दुमती**—( सीताजीने कहा- ) हे नाथ ! मुझे वन जाते समय मार्गमें कुछ भी परिश्रम नहीं होगा। प्रत्युत आपके पीछे २ चलनेमें मुझे ऐसा सुख प्रतीत

होगा जैसा कि बाग-बगीचोंमें आपके साथ घूमने फिरनेसे या आपके साथ शयन करनेसे प्राप्त होता है।

कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥

अन्वयः—मार्गे, त्वया, सह, मम, ये, कुशकाशशरेषीकाः, च, कण्टकिनः, द्रुमाः ( स्युः ते ) तूलाजिनसमस्पर्शाः ( भवेयुः ) ।

सुधा—अष्टाविंशतिसर्गे "द्रुमाः कण्टकिनः श्चैव कुशकाशाश्च भामिनि !" इत्युक्तं सम्प्रति तदुत्तरमाह—कुशकाशेति । मार्गे = पथि, त्वया = भवता, सह= साकं, मम = सीतायाः, ये, कुशकाशशरेषीकाश्च=कुशाः-बर्हिषः, काशाः-पोटगलाः, "अथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः" इत्यमरः । शराः-गुन्द्राः "सरहरी" इति लोके प्रसिद्धाः, "गुन्द्रस्तेजनकः शरः" इत्यमरः । इषीकाः-वृक्षविशेषाः, कुशाश्च, शराश्च, इषीकाश्चेति ते तथोक्ताश्च, कण्टकिनः=कण्टकवन्तः, द्रुमाः = वृक्षाः, (स्युः ते) तूलाजिनसमस्पर्शाः=तूलं-तूलराशिः, अजिनं-कोमलं कन्दल्यादिमृगविशेषचर्म, "कदलीकन्दलीचीनचमूरुप्रियका अपि । समूरुश्चेति हरिणा अमी अजिनयोनयः॥" इत्यमरः । तूलाजिनयोः समः=तुल्यः स्पर्शो येषां ते तथोक्ताः, ( भवेयुः ) ।

इन्दुमती—(अट्ठाइसवां सर्गमें रामचन्द्रजीने कहा था—"द्रुमाः कण्टकिनश्चैव कुशकाशाश्च भामिनि" इसीका उत्तर सीताजी देती हैं—) हे नाथ! कुश, काश, सरपत, मूँज तथा और भी जो अन्य कटीले वृक्ष हैं वे सब वन जाते समय रास्तेमें मुझे रुई और मृग-चर्म की तरह सुखस्पर्शी जान पड़ेंगे ।

महावातसमुद्धूतं यन्मामपकरिष्यति ।
रजो रमण ! तन्मन्ये परार्ध्यमिव चन्दनम् ॥ १३ ॥

अन्वयः—हे रमण ! महावातसमुद्धूतं, यद् , रजः, माम् , अपकरिष्यति, तत् , परार्ध्यं, चन्दनम् , इव, मन्ये ।

सुधा—"अतीव वातस्तिमिरम्" इति यदुक्तं तदुत्तरयति-महेति । हे रमण= वल्लभ !, महावातसमुद्धूतं = महावायुनीतं, यद् , रजः=धूलिः, मां = त्वत्सहचारिणीम् , अपकरिष्यति = अङ्गोपरि पतनेन कलुषीकरिष्यति व्याप्स्यतीति यावत् , तद् = रजः, परार्ध्यं = श्रेष्ठं, चन्दनं = मलयजम् इव, वासितं चन्दनचूर्णमिवेत्याशयः । मन्ये = जाने ।

**इन्दुमती—**("अतीव वातस्तिमिरम्" सर्ग २८ श्लोक १८ का उत्तर सीताजी देतीं हैं-) हे राम!। वनमें आँधीसे उड़कर जो धूल मेरे शरीरपर पड़ेगी, उसे मैं उत्तम चन्दन के समान समझूँगी।

**शाद्वलेषु यदा शिष्ये वनान्तर्वनगोचरा।**
**कुथास्तरणयुक्तेषु किं स्यात्सुखतरं ततः॥ १४॥**

**अन्वयः—**यदा, वनगोचरा, (अहं) वनान्तः, शाद्वलेषु, शिष्ये, (तदा) कुथास्तरणयुक्तेषु, (पर्यङ्केषु सुप्ताया मम) ततः, किं, सुखतरं, स्यात्?।

**सुधा—**"सुप्यते पर्णशय्यासु" इत्यस्योत्तरमाह—**शाद्वलेष्विति**। यदा= यस्मिन्समये, वनगोचरा=वनं प्राप्ता (अहं) वनान्तः=वनमध्ये, शाद्वलेषु= दूर्वादियुक्तभूमिषु, बालतृणवत्प्रदेशेष्वित्यर्थः, शिष्ये=त्वया सह स्वपिष्यामीत्यर्थः, (तदा) कुथास्तरणयुक्तेषु=विलक्षणचित्रकम्बलरूपास्तरणविशिष्टेषु (पर्यङ्केषु त्वया सह पूर्वं सुप्ताया अपि मम) ततः=शाद्वलशयनात्, किं सुखतरं स्यात्= किमधिकं सुखं स्यान्न किमपीत्यर्थः।

**इन्दुमती—**("सुप्यते पर्णशय्यासु" सर्ग २८ श्लोक १० का उत्तर सीताजी देती हैं—) हे नाथ! मैं जब आपके साथ हरी २ घासकी शय्यापर सोऊँगी तब मुझे पलंगपर बिछे हुए मुलायम गलीचेपर सोनेके जैसा अत्यन्त सुख प्राप्त होगा।

**पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु।**
**दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमम्॥ १५॥**

**अन्वयः—**पत्रं, मूलं फल, वा, अल्पं, यदि, वा, बहु, त्वं, स्वयम्, आहृत्य, यद्, दास्यसे, तत्, अमृतरसोपमम्।

**सुधा—**पत्रं=पर्णं, मूलं=कन्दः, फलम् आम्रादि वा, अल्पं=स्वल्पं, यदि वा=अथवा, बहु=अधिकं, त्वं, स्वयम्, आहृत्य=आनीय, यद् दास्यसे=यदर्पयिष्यसि, तत्=पत्रादिकम्, अमृतरसोपमं=पीयूषरसतुल्यं "भवेत्" इति शेषः।

**इन्दुमती—**("यथा लब्धेन सन्तोषः" सर्ग २८ श्लोक १३ का उत्तर सीताजी देती हैं—) हे नाथ! वनमें भोजनके लिये कन्द-मूल, फल या पत्र जो कुछ थोड़ा या बहुत आप स्वयं ला दिया करेंगे, वे ही मुझे अमृतके ऐसे स्वादिष्ट जान पड़ेंगे।

**न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः।**
**आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च॥ १६॥**

**अन्वयः—**तत्र, आर्तवानि, पुष्पाणि, फलानि, च, उपभुञ्जाना, (अहं)

न, मातुः, न, पितुः, न, वेश्मनः, स्मरिष्यामि ।

**सुधा**—तत्र = वने, आर्तवानि = तत्तदृतूत्पन्नानि, पुष्पाणि = कुसुमानि, फलानि = आम्रादीनि च, उपभुञ्जाना = भक्षयमाणा, ( अहं ) न, मातुः=जननीं, न, पितुः = जनकं, न, वेश्मनः=भवनं, स्मरिष्यामि=चिन्तयिष्यामि । मातुरित्यादि कर्मणः शेषत्वविवक्षया अधीगर्थेति षष्ठी बोध्या ।

**इन्दुमती**—( सीताजीने पुनः कहा— ) हे नाथ ! वनवासके समय छहों ऋतुओंमें तत्तत् ऋतुके फल-पुष्पोंका भोजन करती हुई मैं न तो माताकी न तो पिताकी और न घर ही की याद करूँगी ( अर्थात् मेरा जी वनमें कभी भी नहीं घबड़ायगा ) ।

**न च तत्र ततः किञ्चिद्द्रष्टुमर्हसि विप्रियम् ।**
**मत्कृते न च ते शोको, न भविष्यामि दुर्भरा ॥ १७ ॥**

**अन्वयः**—ततः, तत्र, ( त्वं ) मत्कृते, किञ्चित्, विप्रियं, द्रष्टुं, न च, अर्हसि, ( तथा मत्कृते ) ते शोकः, च, न ( भविष्यति अतः ) दुर्भरा, न भविष्यामि ।

**सुधा**—ततः = उक्तहेतोः, तत्र = वने, ( त्वं ) मत्कृते = मन्निमित्तं, किञ्चित् = ईषत्, विप्रियम्=अनभिलषितम्, द्रष्टुम्=अवलोकयितुं, न च=नहि, अर्हसि= शक्नोषि, ( तथा मत्कृते ) ते = तव, शोकश्च = चिन्ता च, न=नहि, ( भविष्यति-अतः ) दुर्भरा = दुःखेन भर्त्तव्या, न भविष्यामि=न स्यामित्यर्थः ।

**इन्दुमती**—( सीताजीने कहा- ) हे नाथ ! वनमें पूर्वोक्तरूपसे मेरे रहने पर मेरे लिये आपको न तो कोई अनभिलषित कार्य ही करना पड़ेगा और न तो मेरे लिये किसी वस्तुकी चिन्ता ही करनी पड़ेगी । अतः हे नाथ ! मैं वनमें दुःखसे भरण-पोषण करने योग्य नहीं होऊंगी (मेरे लिये दुःख नहीं उठाना पड़ेगा)

**यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।**
**इति जानन् परां प्रीतिं गच्छ राम ! मया सह ॥ १८ ॥**

**अन्वयः**—त्वया, सह, यः, ( वासः ), सः, स्वर्गः, त्वया, विना, यः ( वासः सः ) निरयः, इति, परां, प्रीतिं, जानन्, (त्वं) मया, सह, गच्छ ।

**सुधा**—किमधिकजल्पनेन निश्चितमेकं संक्षेपतः शृणिवत्याह—य इति । त्वया=भवता, सह = साकं, यः, ( वासः ) सः, स्वर्गः = स्वर्गसमः, त्वया = भवता, विना, यः ( वासः सः, ) निरयः = नरकोपमः त्वत्संयोगवियोगादन्ये न मे

सुखदुःखे स्तः इति भावः, इति = एवं, परां = वियोगासहां, प्रीतिं = स्नेहं जानन् = पूर्वमपि बहुशोऽनुभवन्, ( त्वं ) मया सह, गच्छ = याहि। यद्वा त्वत्साहित्येन निरयोऽपि स्वर्गस्त्वद्राहित्येन स्वर्गो निरय इति मम निश्चयं जानन् मया सह गच्छेरित्यर्थः।

**इन्दुमती**—( सीताजीने कहा- ) हे राम ! अधिक मैं क्या कहूँ, आपके साथ रहनेमें मुझे सर्वत्र स्वर्गके समान सुख है और आपके विना सर्वत्र नरकके समान दुःख है। बस, यही विचारकर प्रसन्नता पूर्वक मुझे अपने साथमें लेकर ही आप वन जाइये।

**अथ मामेवमव्यग्रां वनं नैव नयिष्यसि।**
**विषमद्यैव पास्यामि मा वशं द्विषतां गमम्॥ १९॥**

**अन्वयः**—अथ, एवम्, ( अपि ) अव्यग्रां, मां, वनं, नैव, नयिष्यसि, ( तर्हि ) अद्य, एव, विषं, पास्यामि, द्विषतां, वशं, मा, गमम्।

**सुधा**—कैकेयीवन्मथितसिद्धान्तमाह—**अथेति**। अथ = यदि, एवं = मत्प्रार्थनाऽनन्तरम् ( अपि ) अव्यग्रां = वनवासे दोषानगणयन्तीं, माम् = आत्मपत्नीं, नैव नयिष्यसि = नैव नेष्यसि, ( तर्हि ) अद्य एव = त्वत्सन्निधावेव, विषम् = अतिगादककालकूटविशेषं, पास्यामि = पान करिष्यामि। तत्र हेतुमाह—**मेति**। द्विषतां = भरतादीनां त्वद्विरहहेतुकसर्ववस्तुविषयकप्रीत्यभावयुक्तानामित्यर्थः। वशम् = अधीनं, मा गमं = न प्राप्स्यामि तानवलोकयितुं न शक्ष्यामीत्याशयः।

**इन्दुमती**—( अन्तमें सीताजी ने कहा— ) हे नाथ ! अब इतनी प्रार्थना करनेके अनन्तर भी यदि आप मुझे; जिसे वन-वास सम्बन्धी किसी बातका भय नहीं है, अपने साथ लेचलनेको राजी नहीं हुए तो मैं आज आपके सामनेमें ही विष-पान कर लूंगी किन्तु वैरियोंका ( कैकेयी और भरतका ) वश होकर यहां नहीं रहूंगी।

**पश्चादपि हि दुःखेन मम नैवाऽस्ति जीवितम्।**
**उज्झितायास्त्वया नाथ ! तदैव मरणं वरम्॥ २०॥**

**अन्वयः**—हे नाथ !, त्वया, उज्झितायाः, मम, पश्चात्, अपि, दुःखेन, जीवितं, नैव, अस्ति, हि, तदा, एव, मरणं, वरम्।

**सुधा**—ननु विषमदस्य स्वल्पकालवृत्तित्वाद्विषपानमकिञ्चित्करमित्यत आह—**पश्चादपीति**। हे नाथ = स्वामिन् !, त्वया = भवता, उज्झितायाः = त्यक्तायाः,

मम=सीतायाः, पश्चात् अपि=विषमदनाशाऽनन्तरमपि, दुःखेन=त्वद्विरहक्लेशेन, जीवितं=प्राणधारणं, मत्कर्तृकत्वद्भ्रात्रादिसेवनं वेति लक्षितोऽर्थः, । नैव अस्ति= नैव भविष्यति, हि = यतः, तदा एव=त्वद्विरहकाल एव, मरणम्=इहलोकत्यागः, वरं=श्रेष्ठम् ।

इन्दुमती—( सीताजीने कहा— ) हे नाथ ! आपके वन चले जानेके बाद भी तो दुःखसे मुझे मरना ही है तो आपसे परित्यक्ता होनेके समय ( आपके सामनेमें ) ही मरजाना अच्छा है ।

**इमं हि सहितुं शोकं मुहूर्त्तमपि नोत्सहे ।**
**किं पुनर्दशवर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥**

अन्वयः—हि, इमं, शोकं, मुहूर्त्तम्, अपि, सहितुं, न, उत्सहे, ( तत्र ) दुःखिता, दशवर्षाणि, त्रीणि, च, एकं, च, किं पुनः ।

सुधा—ननु चतुर्दशवर्षानन्तरमिहागमनं मम निश्चितमेव तत्किमर्थमेतादृश- क्लेशं चिकीर्षुरित्यत आह—इयमिति । हि=यतः, इमं शोकं = त्वद्वियोगजनित- शोकं, मुहूर्त्तम् अपि = द्वादशक्षणात्मककालमपि, सहितुं = मर्षितुं, न उत्सहे= न समर्थाऽस्मि, ( तत्र ) दुःखिता=त्वद्विरहेणातिपीडिता, दशवर्षाणि = दशहाय- नानि, त्रीणि = त्रिवर्षाणि, च=पुनः, एकम् = एकवर्षं च, चतुर्दशवर्षाणीत्यर्थः, किं पुनः = किं वक्तव्यम् । विरहिण्या आदौ दशवर्षाणि, मध्ये त्रीणि वर्षाणि, अन्ते चैकं वर्षं च सममेवाभातीति जनयितुं विभज्य प्रतिपादितम् । एतेन वन- वासकालसंख्याया अतिदुस्तरत्वं सूचितम् ।

इन्दुमती—( सीताजीने पुनः कहा- ) हे नाथ ! मैं आपके वियोग जनित शोकको मुहूर्त्त भर भी नहीं सह सकती तो चौदह वर्षके वियोग जन्य दुःखको कैसे सह सकूंगी ? ।

**इति सा शोकसंतप्ता विलप्य करुणं बहु ।**
**चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥**

अन्वयः—शोकसंतप्ता, ( अत एव ) आयस्ता, सा, इति, करुणं, बहु, विलप्य, भृशं, पतिम्, आलिङ्ग्य, सस्वरं, चुक्रोश ।

सुधा—शोकसंतप्ता = शोकपीडिता, ( अत एव ) आयस्ता = अत्या- यासं प्राप्ता प्रशिथिलगात्रीत्यर्थः, सा = सीता, इति = एवं प्रकारेण, करुणं = करु- णारसयुक्तं, बहु=अनेकविधं, विलप्य = रुदित्वा, भृशम् = अत्यन्तं, पतिं=वल्लभं

रामम् , आलिङ्ग्य = आश्लिष्य, सस्वरं=सशब्दं, चुक्रोश=रुरोद ।

**इन्दुमती**—( अधोलिखित चार श्लोकोंसे बाल्मीकिजी सीताजीके प्रस्तुत स्वरूपका वर्णन करते हैं कि—) इस प्रकार रामचन्द्रजीसे कहनेके पश्चात् सीताजी शोकसे संतप्त हो अनेक प्रकारसे करुणापूर्ण विलापकरके रामचन्द्रजी को आलिंगनकर, जोरसे रोने लगीं ।

**सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ।**
**चिरसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥**

**अन्वयः**—दिग्धैः, विद्धा, गजाङ्गना, इव, बहुभिः, वाक्यैः, ( विद्धा ) सा, चिरसंनियतं, बाष्पम् , अग्निम् , अरणिः, इव, मुमोच ।

**सुधा**—दिग्धैः=विषलिप्तवाणैः, विद्धा = व्यथिता, गजाङ्गना=करिणस्त्री, इव, बहुभिः = वियोगादिसूचकैः, वाक्यैः=रामोक्तैः ( विद्धा ) सा=सीता, चिरसंनियतं=बहुकालनिरुद्धं, बाष्पम्=अन्तरुष्माणम् , अग्निं = वह्निम् , अरणिः इव= वह्निमन्थनकाष्ठमिव, मुमोच=तत्याज । संघर्षितारणिः यथा वह्निं मुञ्चति तथैव राम वाक्यैर्विद्धेयं बाष्पं मुञ्चितवतीति भावः ।

**इन्दुमती**—विषाक्त वाणोंसे व्यथित हथिनीकी तरह श्रीरामचन्द्रजीके वचनोंसे विद्ध सीताजीका बहुत कालसे रुका हुआ आंसू वैसे ही प्रकट हुआ, जैसे अरिणीसे आग प्रकट होती है ( 'अरिणी' काष्ठ विशेषका नाम है रगड़ने पर इससे आग निकलती है जो कि विशिष्ट यज्ञादिमें काम आती है ) ।

**तस्याः स्फटिकसंकाशं वारि सन्तापसम्भवम् ।**
**नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥**

**अन्वयः**—सन्तापसम्भवं, स्फटिकसङ्काशं, तस्याः, वारि, पङ्कजाभ्याम् , उदकम् , इव ,नेत्राभ्यां, परिसुस्राव ।

**सुधा**—सन्तापसम्भवं = वियोगश्रुतिहेतुकसन्तापजनितं, स्फटिकसङ्काशं = स्फटिकसूक्ष्मगुटिकावद्धासमानं, तस्याः = सीतायाः, वारि=नयनजलं, पङ्कजाभ्यां= नीलोत्पलाभ्याम्, उदकं = मकरन्दरूपं तद्वयुष्णं निर्मलं च भवति, तदिव, नेत्राभ्यां = लोचनाभ्यां, परिसुस्राव = परिसस्यन्द ।

**इन्दुमती**—सीताजीकी आंखोंसे स्फटिक प्रस्थरकी तरह श्वेत आँसुओंकी बून्दें वैसे ही टपकने लगीं जैसे कमलोंसे पानीकी बून्दें टपकती हैं ।

**तत्सितामलचन्द्राभं मुखमायतलोचनम् ।**

**पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५ ॥**

**अन्वयः**—सितामलचन्द्राभं, आयतलोचनं, तत् , मुखं, जलोद्धृतम् , अम्बुजम् , इव, बाष्पेण, पर्यशुष्यत ( इव ) ।

**सुधा**—सितामलचन्द्राभं = सिते—शुक्लपक्षे, अमलः—राह्वाद्यनुपरक्तत्वेन निर्मलः, यश्चन्द्रः पूर्णिमाचन्द्र इत्यर्थः, तस्य आभा सादृश्यं यत्र तत् तथोक्तम् , आयतलोचनम्=आयते–दीर्घे, लोचने–नयने यत्र तत्तथोक्तम् मृगनयनमित्यर्थः, तत् = प्रसिद्धं, मुखं = सीताया आननं, जलोद्धृतं = जलं-पयः, उद्धृतं—निसृतं यस्मात्तत्तथोक्तम् आहिताग्न्यादित्वात्समासः । अम्बुजं=कमलम् , इव, बाष्पेण= संतापजनितोष्मणा, अम्बुजपक्षे उष्मणेत्यर्थः, पर्यशुष्यत इव = शोषणमलभत इव इवेत्युभयान्वयी ।

**इन्दुमती**—पूर्णिमाके उत्फुल्ल पूर्णचन्द्रके समान देदीप्यमान तथा बड़े बड़े नेत्रोंसे अति सुशोभित सीताजीका मुखमण्डल शोक-सन्तापसे उसी तरह मुरझा गया जैसे जलसे निकाला हुआ कमल मुरझा जाता है ।

**तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।**
**उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥**

**अन्वयः**—तदा, रामः, दुःखिताम् , (अत एव) विसंज्ञाम् , इव, तां, बाहुभ्यां, परिष्वज्य, परिविश्वासयन् , ( सन् ) वचनम् , उवाच ।

**सुधा**—तदा = तस्मिन् काले, रामः, दुःखितां = वियोगश्रवणहेतुकदुःखाक्रान्ताम् , ( अत एव ) बिसंज्ञाम् इव = चेतनारहितामिव, तां=प्रेयसीं सीतां, बाहुभ्यां=दोर्भ्यां, परिष्वज्य = परिरभ्य, परिविश्वासयन् = साहित्यगमने विश्वास मुत्पादयन् ( सन् ) वचनं = वक्ष्यमाणवाक्यम् , उवाच=उक्तवान् ।

**इन्दुमती**—( इस प्रकार जब सीताजी बहुत रोने लगीं और रोते २ उनका सुन्दर स्वरूप श्रीहत होगया ) तब श्रीरामचन्द्रजी मूर्च्छितप्राय और शोक-सन्तप्त सीताजीको अपनी दोनों विशाल भुजाओंसे आलिंगन कर विश्वास दिलाते हुए उनसे कहने लगे— ।

**न देवि ! तव दुःखेन स्वर्गमप्यभिरोचये ।**
**नहि मेऽस्ति भयं किञ्चित्स्वयंभोरिव सर्वतः ॥ २७ ॥**

**अन्वयः**—हे देवि !, तव, दुःखेन, स्वर्गं, ( प्राप्तम् ) अपि, न, अभिरोचये, स्वयंभोः, इव, सर्वतः, मे, किञ्चिद् , भयं, नहि, अस्ति ।

**सुधा**—तद्वचनमेव वर्णयन्नाह—**नेति**। हे देवि=सीते !, तव=भवत्याः, दुःखेन = क्लेशेन; स्वर्गं = पूर्वोक्तसुखविशेषस्थानं ( प्राप्तम् ) अपि, न अभिरोचये = नाभिलषामि, त्वयि दुःखितायां प्राप्तस्वर्गमपि नेच्छामीत्यर्थः, तेन त्वां सह नेष्यामीति व्यञ्जितम्। यच्च पूर्वोक्तभयादिकं तदप्यकिञ्चित्करमित्यत आह—**नहीति**। स्वयंभोः इव,=स्वयंप्रकाशसर्वाऽवभासकब्रह्मण इव, सर्वतः=सर्वजन्तुभ्यः, मे=मम, किञ्चित्=अल्पमपि, भयं = भीतिः, नहि अस्ति = नहि विद्यते।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे देवि ! तुम्हारे कष्टसे मुझे स्वर्गकी भी अभिलाषा नहीं है। ( वनमें तुम्हारी रक्षा मैं नहीं कर सकूंगा ऐसा तुम्हारा समझना गलत है क्योंकि ) मुझे कुछ भी भय नहीं है। जैसे ब्रह्माजी निर्भय हैं वैसे मैं भी सबतरहसे निर्भीक हूँ (किन्तु-)।

**तव सर्वमभिप्रायमविज्ञाय शुभानने !।**
**वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥**

**अन्वयः**—हे शुभानने !, तव, सर्वम्, अभिप्रायम्, अविज्ञाय, रक्षणे, शक्तिमान्, अपि, ( अहम् ) अरण्ये, ( तव ) वासं, न, रोचये।

**सुधा**—ननु गमननिषेधकवाक्यं पूर्वं त्वया कथमुक्तमित्यत आह—**तवेति**। हे शुभानने=शुभं-दर्शने मङ्गलदायकम्, आननं-वदनं यस्याः तत्सम्बुद्धौ रूपम्। तव=भवत्याः, सर्वं = सहगमनविषयकसमग्रमान्तरम्, अभिप्रायम्=आशयम्, अविज्ञाय = अबुद्ध्वा (तत एव हेतोः) रक्षणे = त्राणे, शक्तिमान् अपि = सामर्थ्यवानपि, ( अहम् ) अरण्ये = विपिने, ( तव ) वासं = स्थितिः, न रोचये-नाङ्गीकृतवान् "इतः पूर्वं" मिति शेषः। एतेन त्वदभिप्रायविज्ञानार्थमेवं पूर्वमभिहितमिति ध्वनितम्।

**इन्दुमती**—( रामचन्द्रजीने कहा—हे सीते ! वनमें मैं भली-भाँति तुम्हारी रक्षा कर सकूंगा किन्तु) हे शुभानने ! मुझे तुम्हारे मनका अभिप्राय ज्ञात नहीं था अतः शक्तिमान् होकर भी मैं तुम्हारा वनजाना पसन्द नहीं करता था।

**यत्सृष्टाऽसि मया सार्धं वनवासाय मैथिलि !।**
**न विहातुं मया शक्या प्रीतिरात्मवता यथा ॥ २९ ॥**

**अन्वयः**—हे मैथिलि !, यत्, मया, सार्धं, वनवासाय, ( गन्तुं ) सृष्टा, असि, ( अतः ) आत्मवता, यथा, प्रीतिः, विहातुं, न, शक्या, ( तथा त्वं ) मया विहातुं, न, शक्या।

**सुधा**—हे मैथिलि = मिथिलादेशोत्पन्ने ! यत् = यस्मात्कारणात् मया = रामेण, सार्धं=साकं, वनवासाय=दण्डकारण्यनिवासाय ( गन्तुं ) सृष्टा असि= निश्चयं प्राताऽसि, यद्वा—सृष्टाऽसि=अवतीर्णाऽसि, ( अतः ) आत्मवता=परमात्मविषयकविज्ञानवता, अतिकृच्छ्राऽवस्थायामप्यक्षुभितमनस्केन वा, यथा= येन प्रकारेण, प्रीतिः = परमात्मविषयकस्नेहः दया वा, विहातुं=परित्यक्तुं, न शक्या = नार्हा ( तथा त्वं मया = रामेण, विहातुं, न शक्या

**इन्दुमती**—( रामचन्द्रजीने पुनः कहा— ) हे मैथिलि ! यदि मेरे साथ वनवासके लिये तुम ब्रह्मासे बनाई गई हो ( एतदर्थ ही तुम्हारा जन्म हुआ है ) तो मैं तुम्हे वैसे ही छोड़कर नहीं जा सकता, जैसे कि शीलवान् अपनी शीलता को नहीं छोड़ता ।

**धर्मस्तु गजनासोरु ? सद्भिराचरितः पुरा ।**
**तं चाहमनुवर्तिष्ये यथा सूर्यं सुवर्चला ॥ ३० ॥**

**अन्वयः**—हे गजनासोरु !, धर्मः, पुरा, सद्भिः, आचरितः, तं, च, धर्मम् अहम्, अनुवर्तिष्ये, (त्वं च) सूर्यं, यथा, सुवर्चला, (अन्ववर्तत तथा मामनुवर्तस्व)

**सुधा**—सपत्नीकमिदं वनगमनं न रागप्राप्तं भवति, किन्तु शिष्टाचारसिद्धमिति प्रतिपादयन्नाह—**धर्मस्त्विति** । हे गजनासोरु =हस्तिशुण्डासदृशजङ्घे !, धर्मः= श्रुतिस्मृत्युदितः, पुरा = पूर्वकाले, सद्भिः = सपत्नीकै राजर्षिभिः, आचरितः = अनुष्ठितः "वर्त्तते" इति शेषः। तं च = पूर्वाचरितञ्च, धर्मम् , अहम् , अनुवर्तिष्ये=प्रवर्तयिष्यामि, ( त्वं च ) सूर्यं=दिवाकरं, यथा=येन प्रकारेण, सुवर्चला= एतन्नाम्नी तत्पत्नी, ( अन्ववर्तत तथा मामनुवर्तस्व )

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे गजनासोरु ( हाथीके सूंडके समान सुन्दर जांघ वाली सीते! ) पहलेके सज्जन लोग जैसा धर्माचरण कर चुके हैं उसीका अनुसरण मैं भी करूँगा और तू भी कर। जैसे सुवर्चला देवी जी अपने पति भगवान् सूर्यका अनुसरण करती हैं वैसे ही तू भी मेरा अनुसरण कर ।

**न खल्वहं न गच्छेयं वनं जनकनन्दिनि ! ।**
**वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१ ॥**

**अन्वयः**—सत्योपबृंहितं, पितुः, (यतः) तद् , वचनं, मां, ( वनं ) नयति, अतः ) हे जनकनन्दिनि ! खलु, अहं, वनं, न, गच्छेयम् , ( इति ) न, (किन्तु गच्छेयमेव ) ।

**सुधा**—मम वनगमनं तु निश्चितमेवेति प्रतिपादयन्नाह—**न खल्विति**। सत्योपबृंहितं=सत्यसंयुक्तं, पितुः=मत्तातस्य, ( यतः ) तद् वचनं=तद् वाक्यं ( "जटावल्कलसंयुतश्चतुर्दशवर्षाणि वने वस" इति वाक्यं ) मां, ( वनं ) नयति=प्रापयति, ( अतः ) हे जनकनन्दिनि=जनकानन्दविधायिनि, सीते !, खलु=निश्चयेन, अहं, वनं=महारण्यं, न गच्छेयं=न व्रजेयम् ( इति ) न ( किन्तु गच्छेयमेव ) नञ्द्वयं प्रकृतमर्थं द्रढ़ीकरोति।

**इन्दुमती**—(रामचन्द्रजीने कहा–) हे जनकनन्दिनि ! मैं वन नहीं जाऊँगा ऐसा भी नहीं हो सकता, क्योंकि सत्यके पाशमें बंधे हुए पिताजीका वचन मुझे वन लेजा रहा है ( अतः उनका वचन-पालन करनेके लिये निश्चय ही मुझे वन जाना होगा )।

**एष धर्मस्तु सुश्रोणि ! पितुर्मातुश्च वश्यता।**
**आज्ञां चाऽहं व्यतिक्रम्य नाऽहं जीवितुमुत्सहे ॥ ३२ ॥**

**अन्वयः**—हे सुश्रोणि !, पितुः, मातुश्च, वश्यता, एष, तु, धर्मः, अहं, ( तयोः ) आज्ञां च, व्यतिक्रम्य, जीवितुम्, अहं, न, उत्सहे।

**सुधा**—ननु यदि तत्र तव नेच्छा तदा पितुर्वचनमुल्लङ्घ्याऽप्यत्रैव तिष्ठेत्यत आह—**एष** इति। हे सुश्रोणि = शोभना श्रोणिः–कटिः यस्याः सा तत्सम्बुद्धौ, पितुः = तातस्य, मातुश्च = जनन्याश्च, वश्यता="जीविते वाक्यकरणादि"ति वाक्यात् अधीनता, एष = अयं, तु = हि, धर्मः = श्रेयस्करः, अहं ( तयोः ) आज्ञाम् = आदेशं, च, व्यतिक्रम्य=उल्लङ्घ्य, जीवितुं = प्रजापालनाय प्राणान् धारयितुम्, अहं, न उत्सहे=नाध्यवस्ये।

**इन्दुमती**—( रामचन्द्रजीने कहा– ) हे सुश्रोणि ! ( सुन्दर कमर वाली ) माता-पिताकी आज्ञाका पालन करना ( उनके अधीनमें रहना ) पुत्रका धर्म है। माता-पिताकी आज्ञाका उल्लंघन कर मैं जीना भी नहीं चाहता।

**अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते।**
**स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥**

**अन्वयः**—स्वाधीनं, मातरं, पितरं, गुरुम्, समतिक्रम्य, अस्वाधीनं, दैवं, प्रकारैः, कथम्, अभिराध्यते।

**सुधा**—ननु मातृपितृवचनपालनं, दैवमाराध्यस्माभिरत्रैव कर्त्तव्यमित्यत आह—**अस्वाधीन**मिति। स्वाधीनं = प्रत्यक्षस्वसेवया आयत्तम्, "अधीनो निघ्न

आयत्तः" इत्यमरः । मातरं = जननीं, पितरं = तातं, गुरुं = वशिष्ठं, समतिक्रम्य= परित्यज्य, अस्वाधीनम् = अप्रत्यक्षत्वेन प्रत्यक्षस्वसेवायत्तत्वरहितम्, यद्वा-अस्वाधीनम् = आराधकानधीनं स्वतन्त्रमिति यावत्। दैवं = देवतां, प्रकारैः=भावनामात्रसाध्याराधनप्रकारैः, कथं = केन प्रकारेण, अभिराध्यते = सेव्यते, तथा च गुरूपदिष्टपथेनैवास्माभिः देवा आराधनीया नान्यथेत्याशयः ।

इन्दुमती —( रामचन्द्रजीने पुनः कहा-हे सीते! दैवसे भी बढ़कर माता, पिता और गुरु होते हैं क्योंकि- ) दैव स्वाधीन ( प्रत्यक्ष ) नहीं है, उसकी आराधना भावनामात्रसे ही मनुष्य करसकता है, किन्तु-माता, पिता और गुरु तो स्वाधीन ( प्रत्यक्ष ) हैं, अत एव उनकी आज्ञाका उल्लघन नहीं करना चाहिये ।

**यत्र त्रयं त्रयो लोकाः पवित्रं तत्समं भुवि ।**
**नान्यदस्ति शुभापाङ्गे ! तेनेदमभिराध्यते ॥ ३४ ॥**

**अन्वयः**—हे शुभापाङ्गे !, यत्र, त्रयं, ( भवति तथा ), त्रयः, लोकाः, ( आराधिता भवन्ति, अतः ) तत्समं, पवित्रं, भुवि, अन्यत्, न, अस्ति, तेन, इदम्, अभिराध्यते ।

**सुधा**—हे शुभापाङ्गे = शुभं-शुभलक्षणसंयुतम्, अपाङ्गं-नेत्रप्रान्तं यस्याः तत्सम्बुद्धौ । यत्र = मात्राद्याराधने सति, त्रयं = धर्मार्थकामरूपं ( भवति, तथा ) त्रयः=ऊर्ध्वाऽधोमध्यवर्त्तिनः, लोकाः = जनाः, ( आराधिता भवन्ति, अतः ) तत्समं = मात्राद्याराधनसदृशं, पवित्रं=पुण्यजनकं, यद्वा-पविः = "पविर्वज्रं महाभयम्" इत्यभिधानात् महाभयरूपः संसारः, तस्मात्त्रायते यत्तत्तथोक्तम्, संसारतारकमित्यर्थः, भुवि = पृथिव्याम्, अन्यत् = एतदतिरिक्तं कञ्चन त्रैलोक्ये वस्तु, न अस्ति=न विद्यते, तेन=हेतुना, इदं=मात्रादित्रयम्, अभिराध्यते=संसेव्यते । तथा चैतेषामाराधनेनैव सकलेष्टसिद्धिरिति यत्नतो मात्रादिकमेवाराधनीया इत्याशयः

**इन्दुमती** —( रामचन्द्रजीने कहा- ) हे शुभापांगे ! ( शुभलोचने ! ) इस पृथिवीपर माता, पिता और गुरुकी सेवासे बढ़कर पवित्र कार्य दूसरा कोई नहीं है, इन तीनोंकी सेवा करनेसे धर्म, अर्थ और काम इन तीनोंकी प्राप्ति होती है तथा तीनों लोकोंकी सेवा हो जाती है, अतः मैं इनकी आराधना (सेवा) करता हूँ ।

**न सत्यं दानमानौ वा न यज्ञाश्चाप्तदक्षिणाः ।**
**तथा बलकराः सीते ! यथा सेवा पितुर्हिता ॥ ३५ ॥**

**अन्वयः**—हे सीते ! यथा पितुः, सेवा, हिता, ( मता ) तथा, सत्यं, न ( बलकरम् ) वा, दानमानौ, न ( बलकरौ तथा ) आप्तदक्षिणाः, यज्ञाः, च, न बलकराः ( मताः ) ।

**सुधा**-सम्प्रति पितृवाक्यस्य सत्यादिवैलक्षण्यमुपपादयति-नेति । अत्र "बलकरा" इति लिङ्गवचनविपरिणामेन यथायथं व्याख्येयम् । हे सीते=जनकात्मजे !, यथा=येन प्रकारेण, पितुः=तातस्य ( एतच्चोपलक्षणं मात्रादेः ) सेवा=आराधना, हिता=कल्याणकरी, ( मता ) तथा, सत्यम्=अनृत, न, ( बलकरं=पारत्रिकाभ्युदयसाधकं ) वा=अथवा, दानमानौ=दानसत्कारौ, न ( बलकरौ=पारत्रिकाभ्युदयसाधकौ, तथा ) आप्तदक्षिणाः=आप्ताः-ब्राह्मणैः प्राप्ताः, दक्षिणा येषु ते तथोक्ताः, यज्ञाश्च=राजसूयादिक्रतवश्च, न बलकराः=पारत्रिकाभ्युदयसाधकाः ( मताः ) ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! सत्य, दान, मान और दक्षिणा सहित यज्ञ भी परलोक प्राप्तिके लिये उतने हितकर नहीं हैं जितनी कि पित्रादि गुरुजनोंकी सेवा है अर्थात् पिता, माता और गुरुकी सेवा करनेमें जो फल मिलता है, वह फल सत्य बोलनेसे, दान व सत्कार करनेसे अथवा दक्षिणा सहित यज्ञ करनेसे प्राप्त नहीं होता ।

**स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च ।**
**गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ ३६ ॥**

**अन्वयः**—गुरुवृत्त्यनुरोधेन, स्वर्गः, धनं, वा, धान्यं, वा, विद्याः, पुत्राः, सुखानि, च,( प्राप्तुं शक्नुवन्ति जनाः, किं वक्तव्यं संसारे तेषां कृते ) किञ्चित्, अपि, ( वस्तु ) दुर्लभं, नास्ति ।

**सुधा**—उक्तमेव द्रढयति—स्वर्ग इत्यादिना । गुरुवृत्त्यनुरोधेन=गुरूणां-मात्रादीनां, वृत्तिः-शुश्रूषणं तदनुरोधेन-तदनुवर्तनेन "अनुरोधोऽनुवर्त्तनम्" इत्यमरः । स्वर्गः=देवलोकः, धनं=हिरण्यादि वित्तं, वा=अथवा, धान्यं=व्रीह्यादि "धान्यं व्रीहिः स्तम्बकरिः" इत्यमरः, वा=अथवा, विद्याः=आन्विक्षिक्यादयः, पुत्राः=सुताः, सुखानि च=एतदतिरिक्तलोकानुवर्त्तनामोदाश्च, ( प्राप्तुं शक्नुवन्ति जनाः, किं वक्तव्यं संसारे तेषां कृते) किञ्चिदपि ( वस्तु ) दुर्लभम्=अप्राप्यं, नास्ति=न विद्यते ।

**इन्दुमती**—(रामचन्द्रजीने कहा-) हे सीते ! जो महात्मा लोग माता, पिता और गुरुकी सेवा किया करते हैं उनके लिये—स्वर्ग, धन-धान्य, विद्या, सन्तानादि कुछ भी दुर्लभ नहीं है।

**देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा परान् ।**
**प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥**

**अन्वयः**—मातापितृपरायणाः, महात्मानः, देवगन्धर्वगोलोकान्, तथा, परान्, ब्रह्मलोकान् ( अपि ) प्राप्नुवन्ति ।

**सुधा**—मातापितृपरायणाः = मात्रादिशुश्रूषणैकरताः, महात्मानः=दृढमनस्काः, देवगन्धर्वगोलोकान्-देवश्च गन्धर्वश्च गौश्चेत्येषां द्वन्द्वे देवगन्धर्वगावस्तेषां लोकास्तान् तथोक्तान् देवलोकगन्धर्वलोकगोलोकानित्यर्थः, तथा, परान् = अत्युत्कृष्टान्, ब्रह्मलोकान् = साकेतलोकान्, (अपि) प्राप्नुवन्ति = लभन्ते ।

**इन्दुमती**—(रामचन्द्रजीने कहा-) हे सीते ! जो महात्मालोग माता-पिता आदि गुरु जनोंकी सेवा किया करते हैं, उनको—देवलोक, गन्धर्वलोक, गोलोक तथा सबसे उत्कृष्ट ब्रह्मलोक भी प्राप्त होता है।

**स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः ।**
**तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३८ ॥**

**अन्वयः**—सत्यधर्मपथे, स्थितः, सः, पिता, यथा, मां, शास्ति, तथा, वर्त्तितुम् ( अहम् ) इच्छामि, हि, यतः, सः, धर्मः, सनातनः ( वर्त्तते ) ।

**सुधा**—सत्यधर्मपथे = सत्यरूपविशेषधर्ममार्गे, स्थितः = वर्त्तमानः सः = स्वतन्त्रः, पिता = मम तातः, यथा = येन प्रकारेण मां = रामं, शास्ति = आज्ञापयति, तथा = तेन प्रकारेण, वर्तितुम्=अनुष्ठातुम् ( अहम् ) इच्छामि = अभिलषामि, हि = यतः, सः = पित्राज्ञापालनरूपः, धर्मः, सनातनः = सार्वकालिकः ( वर्तते ) ।

**इन्दुमती**—( रामचन्द्रजीने कहा-हे सीते ! इस लिये ) सत्यमार्गमें स्थित मेरे पिता मुझे जो आज्ञा देते हैं, तदनुकूल ही मैं करनेकी इच्छा करता हूँ क्योंकि यही सनातनधर्म है।

**मम सन्ना मतिः सीते ! नेतुं त्वां दण्डकावनम् ।**
**वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥**

**अन्वयः**—हे सीते !, (वने पत्या सह) वसिष्यामि, इति, ( दृढनिश्चयेन )

त्वम् , माम् , अनुयातुं, ( यतः ) सुनिश्चिता, ( अतः ) त्वां, दण्डकावनं, नेतुं, मम (या) मतिः ( त्वद्भावापरिज्ञानाद्विरुद्धासीत् ) सा (इदानीं) सन्ना (जाता)।

**सुधा**—हे सीते = जनकात्मजे ! ( वने पत्या सह ) वसिष्यामि = वत्स्यामि, इति–एवं (दृढनिश्चयेन) त्वं, मां = स्वकान्तम् , अनुयातुम् = अनुगन्तुं (यतः) सुनिश्चिता = सुनिर्णीता, (अतः) त्वां = भवतीं, दण्डकावनं = दण्डकनाममहारण्यं, नेतुं = प्रापयितु, मम = रामस्य, (या) मतिः = बुद्धिः, (त्वद्भावापरिज्ञानाद्विरुद्धासीत् ) सा = मतिः, ( इदानीं ) सन्ना = विशीर्णा सम्प्रति त्वद्भावं परिज्ञाय सहैव वनं नेष्यामीत्याशयः ।

**इन्दुमती**—( रामचन्द्रजीने कहा– ) हे सीते ! पहले तो, तुम्हारे मनका अभिप्राय न जाननेके कारण ही मेरी इच्छा तुम्हें दण्डक वनमें ले चलनेकी नहीं थी, किन्तु अब तुम्हारा मेरे साथ वन चलनेका दृढ़निश्चयको देखकर मेरा विचार बदल गया है, अब मैं तुम्हें अपने साथ दण्डकवनमें ले चलूंगा ।

**सा हि सृष्टानवद्याङ्गी वनाय मदिरेक्षणे ! ।**
**अनुगच्छस्व मां भीरु ! सहधर्मचरी भव ॥ ४० ॥**

**अन्वयः**—हे मदिरेक्षणे ! हि, अनवद्याङ्गी, सा, ( त्वं ) वनाय, सृष्टा ( असि अतः ) हे भीरु ! माम् , अनुगच्छस्व, (तथा वने त्वं) सहधर्मचरी, भव।

**सुधा**—हे मदिरेक्षणे = मदिरा–"सौष्ठवेन परित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता ॥" इत्युक्तलक्षणेन दृष्टिविशेषः, तद्युक्तम् ईक्षणम्–अवलोकनं यस्याः तत्सम्बुद्धौ, हि = यतः, अनवद्याङ्गी=अनवद्यं–निष्पापम् , अङ्गं–शरीरं यस्याः सा तथोक्ता, सा = पातिव्रतधर्मपालने प्रसिद्धा, ( त्वं ) वनाय = वनवासाय, सृष्टा = निश्चिता, यद्वा—अवतीर्णा ( असि, अतः ) हे भीरु=कातरे !, माम् , अनुगच्छस्व = अनुव्रजस्व। (तथा वने त्वं) सहधर्मचरी= सहधर्मविधायिनी, भव। एतेन वनवाससाध्यस्य स्वधर्मस्य रक्षोवधजस्य त्वया विनाऽसम्भव इति सूचितम् ।

**इन्दुमती**—( रामचन्द्रजीने कहा– ) हे मदिरेक्षणे ! ( रक्तलोचने ! ) जब धर्मस्वरूपा तुम वन जानेके लिये ही बनायी गई हो तब हे भीरु ! तुम मेरे साथ वन चलो और मेरे धर्मानुष्ठानमें साथ हो जाओ ।

**सर्वथा सदृशं सीते ! मम स्वस्य कुलस्य च ।**
**व्यवसायमनुक्रान्ता कान्ते ! त्वमतिशोभनम् ॥ ४१ ॥**

**अन्वयः**—हे सीते ! त्वं, सर्वथा, मम, कुलस्य, च, स्वस्य, कुलस्य (अपि) सदृशं, व्यवसायं, अनुक्रान्ता, ( अत एतत् ) अतिशोभनम् , (संजातम् ) ।

**सुधा**—हे सीते = जनकात्मजे !, त्वं=भवती, सर्वथा = सर्वप्रकारेण, मम, कुलस्य = रघुवंशस्य, च=पुनः, स्वस्य = स्वकीयस्य, कुलस्य=वंशस्य, ( अपि) सदृशं = तुल्यं, व्यवसायं-भर्त्रनुसरणविषयकाध्यवसायम् , अनुक्रान्ता=प्राप्ता, ( अत एतत् ) अतिशोभनम् = अतिभव्यं ( सञ्जातम् ) ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! मेरे साथ वन चलनेका तुम्हारा विचार बहुत ही उत्तम है, क्योंकि यह मेरे और मेरे कुलके सर्वथा अनरूप कार्य है ।

**आरभस्व शुभश्रोणि ! वनवासक्षमाः क्रियाः ।**
**नेदानीं त्वदृते सीते ! स्वर्गोऽपि मम रोचते ॥ ४२ ॥**

**अन्वयः**—हे शुभश्रोणि !, वनवासक्षमाः, क्रियाः, आरभस्व, हे सीते ! त्वदृते, इदानीं, स्वर्गः, अपि, मम, न, रोचते ।

**सुधा**—हे शुभश्रोणि = शोभनकटे !, वनवासक्षमाः = वनवासहिताः "क्षमं शक्ते हिते त्रिषु" इत्यमरः । क्रियाः = दानादिकर्माणि, आरभस्व = प्रारभस्व, हे सीते = वैदेहि !, त्वदृते = त्वया विना, इदानीम्=एवं दृढनिश्चये, स्वर्ग अपि= देवलोकोऽपि, मम = रामाय, न रोचते = न प्रीणाति ।

**इन्दुमती**—(रामचन्द्रजीने कहा-) हे शुभश्रोणि ! सीते ! वनवास जानेकी तैयारी करो । तुम्हारे विना इस समय मुझे स्वर्ग भी नहीं रुचता ।

**ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् ।**
**देहि चाशंसमानेभ्यः संत्वरस्व च मा चिरम् ॥ ४३ ॥**

**अन्वयः**—आशंसमानेभ्यः, भिक्षुकेभ्यः, ब्राह्मणेभ्यः, च, रत्नानि, च, भोजनं, च, देहि, च, संत्वरस्व, मा, चिरम् ।

**सुधा**—आशंसमानेभ्यः = मङ्गलमुच्चारयितृभ्यः, भिक्षुकेभ्यः = याचकेभ्यः, ब्राह्मणेभ्यः = विप्रेभ्यश्च, रत्नानि = उत्तमवस्तूनि, च = पुनः, भोजनं = खाद्यं च, देहि = अर्पय, च = तथा, संत्वरस्व = गमनाय शीघ्रं प्रयतस्व, मा चिरं= विलम्बं न कुरु ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! मंगलपाठ करने वाले ब्राह्मणोंको रत्नादि दान दो और भिक्षुकोंको भोजन दो तथा अब विलम्ब मत

करो ( वन चलनेके लिये शीघ्र तैयार हो जाओ )।

**भूषणानि महार्हाणि वरवस्त्राणि यानि च ।**
**रमणीयाश्च ये केचित्क्रीडार्थाश्चाऽप्युपस्कराः ॥ ४४ ॥**
**शयनीयानि यानानि मम चान्यानि यानि च ।**
**देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥**

**अन्वयः**—ब्राह्मणानाम् , अनन्तरं, मम, च क्रीडार्थाः, रमणीया, ये, केचित् , उपस्कराः, ते, च, यानि, महार्हाणि, भूषणानि, च, वरवस्त्राणि, अपि, च, यानि, यानानि, शयनीयानि, (तानि) अन्यानि च स्वभृत्यवर्गस्य, देहि ।

**सुधा**—ब्राह्मणानां = ब्राह्मणसंप्रदानकदानानाम् , अनन्तरं = तदुत्तरं मम, च = स्वस्य, क्रीडार्थाः-क्रीडामात्रप्रयोजनकाः, रमणीयाः = मनोहराः, ये केचित् , उपस्कराः = स्वर्णमयपुत्रिकादिसामग्र्यः, ते = सर्वे, च = पुनः, यानि, महार्हाणि=बहुमूल्यानि, भूषणानि=हेमाङ्गदाद्यलङ्काराः, च=तथा, वरवस्त्राणि अपि= उत्तमवसनान्यपि, च=पुनः, यानि, यानानि = रथाः, शयनीयानि = स्वापयोग्य-वस्त्रादीनि ( तानि ) अन्यानि=उक्ताऽवशिष्टानि च ( यानि तानि ) स्वभृत्य-वर्गस्य=स्वदासवर्गेभ्यः, देहि = वितर ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे सीते ! तुम अपने और मेरे बहु मूल्यक सभी आभूषण तथा श्रेष्ठ(रत्न जड़ित) जितने वस्त्र हैं वे तथा अन्यभी जो उपहारमें प्राप्त बहुमूल्यक विनोदका सामान है वह एवं ओढ़ने-बिछौने तथा सवारी आदि ( जो कुछ उपभोगका सामान हो वह ) ब्राह्मणोंको देकर अवशिष्ट जो बचे वेनोकरों-चाकरों को दे दो ।

**अनुकूलं तु सा भर्त्तुर्ज्ञात्वा गमनमात्मनः ।**
**क्षिप्रं प्रमुदिता देवी दातुमेव प्रचक्रमे ॥ ४६ ॥**

**अन्वयः**—आत्मनः, गमनम् , भर्त्तुः, अनुकूलं, ज्ञात्वा, प्रमुदिता, (सती), देवी, सा, 'क्षिप्रं, तु, दातुम् , एव, प्रचक्रमे ।

**सुधा**—आत्मनः = स्वस्य, गमनं = वनाय गन्तुम् , भर्त्तुः = वल्लभस्य, अनुकूलम् = अविरुद्धम् , ज्ञात्वा = अवबुध्य, प्रमुदिता = प्रहर्षिता, ( सती ) देवी = देवतावदाराधनीया, सा = सीता, क्षिप्रं=शीघ्रं, तु, दातुं = वितरितुम् एव, प्रचक्रमे = आरब्धवती ।

**इन्दुमती**—( वाल्मीकिजी कहते हैं कि- ) अपने स्वामी श्रीरामचन्द्रजीको

अनुकूल देख तथा उनके साथ अपना वनजाना निश्चय जानकर सीताजी अति प्रसन्न हुईं और (रामचन्द्रजीके कथनानुसार) शीघ्रतासे ब्राह्मणोंको और नौकर-चाकरोंको यथा योग्य वस्तु सब देनेके लिये उद्यत हो गयीं ।

**ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्त्तुरवेक्ष्य भाषितम् ।**
**धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥४७॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिंशः सर्गः ।

---

**अन्वयः**—भर्त्तुः, भाषितम् , अवेक्ष्य, ततः, प्रहृष्टा, प्रतिपूर्णमानसा, यशस्विनी, मनस्विनी, अङ्गना, धर्मभृतां, धनानि, रत्नानि, च, दातुं, प्रचक्रमे ।

**सुधा**—भर्त्तुः=पत्युः, भाषितं=वचनम् , अवेक्ष्य=आलोच्य, ततः=तदनन्तरं, प्रहृष्टा—प्रमुदिता, प्रतिपूर्णमानसा=प्रतिपूर्णम्-अक्षुब्धं, मानसं-चित्तं यस्याः सा तथोक्ता निश्चिन्तेत्यर्थः, यशस्विनी=कीर्त्तिमती, मनस्विनी=दृढमनस्का, अङ्गना=स्त्री सीता, धर्मभृतां=धर्मभृद्भ्यः, धनानि=वित्तानि, रत्नानि=बहुमूल्यवस्तूनि च, दातुं=वितरितुं, प्रचक्रमे=प्रारब्धवती ।

इति श्रीवाल्मीकीयरामायणेऽयोध्याकाण्डे "सुधा" टीकायां त्रिंशः सर्गः ।

---

**इन्दुमती**—यशस्विनी सीताजी स्वामी श्रीरामचन्द्रजीको अपने अनुकूल बोलते देख प्रसन्न होकर निश्चिन्त हो गयीं ( उनकी सारी दुःख-व्यथा दूर हो गयी ) और मनस्विनी सीताजी धर्मात्मा ब्राह्मणोंको ( रामचन्द्रजीके कथनानुसार ) धन-रत्नादि दान देने लगीं ॥

इस प्रकार इन्दुमती टीकामें अयोध्याकाण्डका ३० वां सर्ग समाप्त हुआ ।

---

## एकत्रिंशः सर्गः

### भ्राता लक्ष्मणः

**एवं श्रुत्वा स संवादं लक्ष्मणः पूर्वमागतः ।**
**बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥**

**अन्वयः**—पूर्वम् , आगतः, बाष्पपर्याकुलमुखः, सः, लक्ष्मणः, एवं, संवादं, श्रुत्वा, शोकं, सोढुम् , अशक्नुवन् ( सन् आस ) ।

**सुधा**—एवं रामेण सीतागमने स्वीकृते लक्ष्मणस्यानुगमनप्रार्थनमुपदिशन्नाह—**एवमिति** । पूर्वं=कौशल्यागृहाद्रामसीतासंवादप्रवृत्तेः प्रागेव, आगतः=

आयातः, बाष्पपर्याकुलमुखः=अश्रुव्याप्तवदनः, सः, लक्ष्मणः=सौमित्रिः, एवम् = अनुपदोक्तप्रकारेण, संवादं = सीतारामोक्तिप्रत्युक्ती श्रुत्वा = आकर्ण्य, शोकम्= अर्धशरीरभूतायाः सीताया अपि वनानुगमनं कृच्छ्रादेवाङ्गीकृतं मम कथं तत्सं-भविष्यतीति संभावितरामविरहजं संतापं, सोढु = मर्षितुम्, अशक्नुवन् = असहन्, ( सन् आस )।

**इन्दुमती**—( महर्षि बाल्मीकिजी कहते हैं कि– ) श्री रामचन्द्रजी और सीताजीके आपसमें परस्पर बात–चीत आरंभ होनेके पूर्व ही श्रीलक्ष्मणजी वहां पहुँच गये थे। वे इस बात–चीतको सुनकर शोकके वेगको रोकनेमें असमर्थ हो गये, उनका मुख रोदनाश्रुसे व्याप्त हो गया।

**स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।**
**सीतामुवाचातियशा राघवं च महाव्रतम् ॥ २ ॥**

**अन्वयः**—अतियशाः, सः, रघुनन्दनः, भ्रातुः, चरणौ, गाढं, निपीड्य, सीताम्, महाव्रतम्, राघवं, च, उवाच।

**सुधा**—अतियशाः = उत्कृष्टकीर्त्तिमान्, सः = सर्वजनविदितः, रघुनन्दनः= लक्ष्मणः, भ्रातुः=रामस्य, चरणौ = पादौ गाढं = दृढं, निपीड्य = प्रणम्य, सीतां=भ्रातृजायां, ( चक्षुरादिभिः प्रार्थयन्, ) महाव्रतं=न त्यजेयं कथंचन एत-द्व्रतं मम इत्युक्तगुरुतरव्रतयुक्तं, राघवं=रामं, च = तु, उवाच = स्वाभिमत-फलाय विज्ञापयामास। स्वाभिमतप्राप्तौ सीताशरणागमनमेव मद्गमनमङ्गीकार-यत्येवमयमेव मुख्य उपाय इति मत्वा तत्प्रार्थनेत्यवगन्तव्या।

**इन्दुमती**—रघुकुलका आनन्द वर्धक महायशस्वी श्रीलक्ष्मणजी अपने बड़े भाई श्रीरामचन्द्रजीके चरणोंमें साष्टांग प्रणाम कर महाव्रतधारी श्रीरामचन्द्रजी तथा सीताजी से ( रोते हुए ) कहने लगे—।

**यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् ।**
**अहं त्वानुगमिष्यामि वनमग्र धनुर्धरः ॥ ३ ॥**

**अन्वयः**—( हे राघव ! ) यदि, मृगगजायुतम्, वनं, गन्तुं, बुद्धिः, कृता, ( तर्हि ) अहं, (तव) अग्रे, धनुर्धरः, ( सन् ) त्वा, वनम्, अनु, गमिष्यामि।

**सुधा**—कैङ्कर्यमर्थयते—**यदीति**। (हे राघव !), यदि=चेत्, मृगगजायुतं= हरिणहस्तिसंयुतं, वनं=महारण्यं, गन्तुं=यातुं, बुद्धिः=मतिः, कृता = निश्चिता ( तर्हि ) अहं = लक्ष्मणः, ( तव ) अग्रे=पुरतः, धनुर्धरः = धृतधनुः ( सन् )

त्वा=त्वां वनगन्तारं, वनं=महारण्यम्, अनु=सह, गमिष्यामि=व्रजिष्यामि । यद्वा—अनु=पश्चात्, (अपि) गमिष्यामि, तथा च तवाग्रे पश्चाद्वा यत्र दुष्टमृगादिशङ्का तत्र धृतधनुरहं सावधानो गमिष्यामीत्यर्थः । "यदि" इत्यनेन रामस्य वनगमनं स्वानभिमतमित्यवधेयम् ।

इन्दुमती—(लक्ष्मणजीने कहा-) हे राघव ! यदि मृगों व हाथियोंसे भरे हुए वनमें जानेका आप निश्चय कर चुके हैं, तो मैं भी आपके पीछे चलूंगा और बनमें आपके आगे आगे धनुष-बाण लेकर ( अंगरक्षक बनकर ) रहूंगा ।

**मया समेतोऽरण्यानि रम्याणि विचरिष्यसि ।**
**पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥**

**अन्वयः**—( हे राघव ! ), मया, समेतः, समन्ततः, पक्षिभिः, मृगयूथैः, च, संघुष्टानि, रम्याणि, अरण्यानि, विचरिष्यसि ।

**सुधा**—(हे राघव !) मया=धनुर्धरेण, समेतः=सहितः, समन्ततः=अभितः, पक्षिभिः=शकुन्तैः, मृगयूथैः=हरिणसमूहैः, च संघुष्टानि=संरावितानि, रम्याणि=मनोहराणि, अरण्यानि=वनानि, विचरिष्यसि=भ्रमिष्यसि ।

इन्दुमती—( लक्ष्मणजीने कहा- ) हे राघव ! जिन वनोंमें पक्षी और मृगोंके झुण्ड चारो ओर सम्यक् प्रकारसे सुन्दर शब्द करते हैं ऐसे रमणीय उन वनोंमें आप मुझको साथमें लेकर घूमना ।

**न देवलोकाक्रमणं नामरत्वमहं वृणे ।**
**ऐश्वर्यं चापि लोकानां कामये न त्वया विना ॥ ५ ॥**

**अन्वयः**—त्वया, विना, अहं, देवलोकाक्रमणं, न, कामये, ( तथा त्वया विना अमरत्वम्, च, (अहं), न, वृणे, ( तथा त्वया विना ) लोकानाम्, ऐश्वर्यम्, अपि, न ( कामये ) ।

**सुधा**—नन्वत्रैव भोगानुपभुज्य त्वया स्थातव्यमित्यत आह-नेति । त्वया=भवता, विना, अहं=लक्ष्मणः, देवलोकाक्रमणं, (१) नहुषादिवद्देवलोकमारोहः,

---

(१) पुरा किल वृत्रवधेन ब्रह्महत्यापापशालिनि देवेन्द्रे मानससरोवरे तिष्ठति देवैः स्वर्गलोकमराजकं वीक्ष्य चन्द्रवंशीयो राजा नहुषः स्वतपोभिर्विवर्ध्य स्वर्गराज्ये प्रतिष्ठापितः । स च कदाचिदिन्द्राणीं कामयमानस्तया-उक्तः "राजन् ! यदि भवान् महर्षिभिरुद्वाहितां शिविकामारुह्य मद्भवनमागमिष्यति तदा भवन्तमहं भजिष्यामि" इति। तदेव स्वीकृत्य नहुषस्तु भृग्वादीन् देवर्षीन् शिविकायां वाहकत्वेन नियोज्य तामारुह्येन्द्राणीं प्रति व्रजन् शीघ्रं चलितुं पुरो-

न कामये=नाभिलषामि, ( तथा त्वया विना ) अमरत्वं, च न वृणे=नस्वीकरोमि, ( तथा त्वया विना ) लोकानां=भूर्भुवस्स्वरित्यादिचतुर्दशभुवनानाम्, ऐश्वर्यम् अपि=लोकाधिपतित्वमपि, ब्रह्मत्वमिति यावत्, न, (कामये) ।

**इन्दुमती**—( लक्ष्मणजीने कहा- ) हे राघव ! आपके विना न तो मुझे स्वर्गकी, न अमरत्वकी और न त्रिलोकोंके ऐश्वर्यकी ही इच्छा है ।

**एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चतः ।**
**रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥**

**अन्वयः**—वनवासाय, निश्चितः, एवं, ब्रुवाणः, सौमित्रिः, बहुभिः, सान्त्वैः, रामेण, निषिद्धः, ( अपि ) पुनः, अब्रवीत् ।

**सुधा**— वनवासाय=वनवासं विधातुं, निश्चितः=कृतनिश्चयः, एवम्=उक्तप्रकारेण, ब्रुवाणः=कथ्यमानः, सौमित्रिः=लक्ष्मणः, बहुभिः=अनेकप्रकारैः, सान्त्वैः=वियोगश्रवणजनितोद्वेगशामकैः, ( वचनैः ) रामेण=ज्येष्ठभ्रात्रा, निषिद्धः=वारितः, ( अपि ) पुनः=भूयः, अब्रवीत्=अवोचत् ।

**इन्दुमती**—( वाल्मीकिजी कहते हैं कि- ) लक्ष्मणजीके इस प्रकार कहनेपर और उनको भी अपने साथ वन जानेको उद्यत देख श्री रामचन्द्रजीने लक्ष्मणजीको बहुत प्रकारसे समझाया और नहीं चलनेको कहा, परन्तु लक्ष्मणजी ( नहीं माने ) पुनः कहने लगे—।

**अनुज्ञातस्तु भवता पूर्वमेव यदस्म्यहम् ।**
**किमिदानीं पुनरपि क्रियते मे निवारणम् ॥ ७ ॥**

**अन्वयः**—यत्, पूर्वमेव, भवता, अनुज्ञातः, अहम्, अस्मि, तु, इदानीं, पुनः, अपि, मे, निवारणं किं, क्रियते ।

**सुधा**—यत्=यस्मात् कारणात्, पूर्वमेव=प्रागेव, भवता=श्रीमता, अनुज्ञातः=आज्ञापितः, ( तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकी क्रियाः॥" इत्यनेनादिष्टः, तथा "भ्रातृपुत्रौ समौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥" इत्यनेन च भरतशत्रुघ्नयो रेव सीताया अनुसरणीयत्वोक्त्या चादिष्टः ) अहं लक्ष्मणः, अस्मि, तु=

---

यायिनं भृगुं मूर्ध्नि "सर्प सर्प" इति कथयन्नताड़यत् । अत्रान्तरे भृगोर्जटास्वन्तर्हितो भगवानगस्त्यस्तत्पदेन ताड़ितः शशाप "त्वं सर्पः सन् पतितो भव" तेन च नहुषः सर्पो भूत्वा हिमालयगुहायामपददिति महाभारतीया कथा ।

तर्हि, इदानीं=सम्प्रति; पुनरपि=भूयोऽपि मे=मम, निवारणं=निषेधः, किं=कथं, क्रियते =विधीयते । किं च "पूर्वम्" इत्यस्यावतरणसमयेऽपीत्यर्थोऽपि ।

इन्दुमती—( लक्ष्मणजीने कहा— ) हे राघव ! आपने तो पहले मुझे ( वनजानेकी ) आज्ञा दी थी, फिर अभी इस प्रकार निवारण ( मना ) क्यों कर रहे हैं ?

**यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः ।**
**एतदिच्छामि विज्ञातुं संशयो हि ममाऽनघ ! ॥ ८ ॥**

**अन्वयः**—गन्तुम् , इच्छतः, यदर्थं, मे, प्रतिषेधः, ( भवता ) क्रियते, एतत् , विज्ञातुम् , ( अहम् ) इच्छामि, हि, हे अनघ ! मम, ( हृदि महान् ) संशयः ( अस्ति ) ।

**सुधा**—ननु प्रयोजनविशेषस्य विद्यमानत्वात् पूर्वं गमनायानुज्ञातः सम्प्रति तदभावान्निवार्यसे इत्यत आह—**यदिति** । गतुं=यातुम् , इच्छतः=अभिलषतः, यदर्थं=यन्निमित्तं, मे = लक्ष्मणस्य, प्रतिषेधः=निवारणं ( भवता ) क्रियते = विधीयते, एतत् = निमित्तं, विज्ञातुम् = अवबोद्धुम् , ( अहम् ) इच्छामि=अभिलषामि, हि = यतः, हे अनघ = निष्पाप ! , मम = लक्ष्मणस्य, ( हृदि महान् ) संशयः=पूर्वं केनाऽभिप्रायेणानुमतिः, सम्प्रति केनाऽभिप्रायेण निवारणमिति संदेहः, ( अस्ति ) ।

**इन्दुमती**—( लक्ष्मणजीने कहा— ) हे अनघ ! ( निष्पाप ! ) जिस कारणसे आप मुझे वन जानेसे रोकते हैं, उस कारणको मैं जानना चाहता हूँ, क्योंकि इस निषेधको सुनकर मुझे बहुत संशय हो गया है ।

**ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ।**
**स्थितं प्राग्गामिनं धीरं याचमानं कृताञ्जलिम् ॥ ९ ॥**

**अन्वयः**—ततः, अग्रतः, स्थितं, प्राग्गामिनं, याचमानं, धीरं, कृताञ्जलिं, लक्ष्मणं, महातेजा, रामः, अब्रवीत् ।

**सुधा**—ततः=लक्ष्मणकथनानन्तरम् , अग्रतः = अग्रे, स्थितं = वर्त्तमानम् प्राग्गामिनं = रामगमननिश्चये सति रामगमनात्पूर्वमेव गमनशीलं, याचमानं = सहगमनं प्रार्थयन्तं, धीरं = धैर्यवन्तं, कृताञ्जलि = याच्ञाव्यञ्जकाञ्जलियुक्तं, लक्ष्मणं=सौमित्रिं, महातेजा = अतितेजस्वी, रामः, अब्रवीत्=अवोचत् ।

**इन्दुमती**—( वाल्मीकिजी कहते हैं कि— ) हाथ जोड़कर वन जानेके

लिये प्रार्थना करते हुए और पहलेसे बन यात्रा करनेके लिये तैयार आगेमें खड़े हुए उन धीर श्रीलक्ष्मणजीके उपर्युक्त वचनोंको सुनकर महातेजस्वी श्रीरामचन्द्रजी कहने लगे—।

**स्निग्धो धर्मरतो धीरः सततं सत्पथे स्थितः।**
**प्रियः प्राणसमो वश्यो विधेयश्च सखा च मे ॥ १० ॥**
**मयाद्य सह सौमित्रे ! त्वयि गच्छति तद्वनम्।**
**को भजिष्यति कौशल्यां सुमित्रां वा यशस्विनीम् ॥ ११ ॥**

**अन्वयः**—हे सौमित्रे ! च, (त्वं) स्निग्धः, धर्मरतः, धीरः, सततं, सत्पथे, स्थितः, ( मम ) प्राणसमः, प्रियः, वश्यः, विधेयः, मे, सखा, च, मया, सह, अद्य, त्वयि, तद्वनं, गच्छति ( सति ) यशस्विनीं, कौशल्यां, सुमित्रां, वा, कः, भजिष्यति।

**सुधा**—तद्वचनमेवाह—**स्निग्ध** इत्यादिना । श्लोकद्वयमेकान्वयि, च शब्दौ यद्यपितथाप्यर्थवाचकौ, वाश्चार्थे । **व्याख्या**—हे सौमित्रे=लक्ष्मण !, च= यद्यपि ( त्वं ) स्निग्धः = मद्विषयकस्नेहवान्, धर्मरतः = मत्तोषककर्मनिष्ठः, धीरः=कर्मविषयकप्रमादरहितः, सततं=निरन्तरं, सत्पथे = वेदोक्तमार्गे, स्थितः = वर्त्तमानः, ( मम ) प्राणसमः = प्राणतुल्यः, प्रियः=स्नेही, वश्यः = मदधीनः, विधेयः = मया अवश्यं धारणीयः, मे=मम, सखा = सुहृत्, ( वर्त्तसे ) च = तथापि, मया=रामेण, सह=सार्धं, अद्य=अस्मिन्नहनि, त्वयि = भवति, तद्वनं = मृगगजादियुतं मज्जिगमिषितं दण्डकारण्यं, गच्छति=व्रजति, ( सति ) यशस्विनीं= कीर्त्तिमतीं, कौशल्यां = मम मातरं सुमित्रां=तव मातरं, वा=च, कः भजिष्यति= कः सेविष्यते।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) हे लक्ष्मण ! तुम मेरे स्नेही, धर्ममें रत, पराक्रमी, सर्वदा सन्मार्गपर चलनेवाले, प्राणके समान प्रिय, भक्त, मेरे छोटे भाई हो और मेरे मित्र भी हो ( अतः यदि तुम मेरे साथ बन चलोगे तो सभी प्रकारसे मुझे आराम मिलेगा; किन्तु-) हे सुमित्रानन्दन ! आज मेरे साथ तुम्हारे भी वन चले जानेपर यशस्विनी माता कौशल्या और सुमित्राका भरण-पोषण कौन करेगा ? ।

**अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव।**
**स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥**

**अन्वयः**—महातेजा, यः, महीपतिः, पृथिवीं, पर्जन्यः, इव, अभिवर्षति, सः, ( सम्प्रति ) कामपाशपर्यस्तः ( अस्ति )।

**सुधा**—ननु भर्तैवास्या रक्षको भविष्यतीत्यत आह—**अभिवर्षतीति**। महातेजा=अतितेजस्वी, यः, महीपतिः=राजा, पृथिवीं=भूमिं, पर्जन्यः=मेघ इव, अभिवर्षति=प्रजेप्सितमखिलं ददाति, सः=महीपतिः ( सम्प्रति ) कामपाशपर्यस्तः=कामपाशेन-कैकय्यनुरागेण, पर्यस्तः-बद्धः, ( अस्ति ) अत एव तस्माद्रक्षणं तस्या असम्भव इत्याशयः।

**इन्दुमती**—(रामचन्द्रजीने कहा—) हे लक्ष्मण! महापराक्रमी पृथिवीपति महाराज (पिताजी) मेघकी तरह अर्थात् मेघ जैसे पृथिवीका मनोरथ पूर्ण करता है ( यथावसर पर बरस कर शस्य-समृद्धि करता रहता है ) उसी प्रकार सबके मनोरथको पूर्ण करते थे किन्तु वे तो अभी काम-पाशमें बंध गये हैं ( कैकेयीके कुचक्रमें फंस गये हैं ) वे माता कौशल्या और सुमित्राकी भलाई नहीं कर सकेंगे अतः तुम्हारा यहां रहना आवश्यक है।

**सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता।**
**दुःखितानां सपत्नीनां न करिष्यति शोभनम्॥ १३॥**

**अन्वयः**—अश्वपतेः, नृपस्य, सुता, सा, हि, दुःखितानां, सपत्नीनां, ( समीपे ) शोभनम्, इदं, राज्यं, ( प्राप्यापि ) न, करिष्यति।

**सुधा**—ननु तर्हि प्राप्तराज्याधिकारत्वात्कैकेयी रक्षिष्यतीत्यत्राह—**सेति**। अश्वपतेः=अश्वपतिनाम्नः, नृपस्य=राज्ञः, सुता=दुहिता, सा हि=कैकेयी अपि, दुःखितानां=मद्वियोगजनितप्राप्तक्लेशानां, सपत्नीनां=कौशल्यादीनां ( समीपे ) शोभनम्=अतिसम्पन्नम्, इदं राज्यम्=इदमाधिपत्यं ( प्राप्यापि ) न करिष्यति=न पालयिष्यति एतेन तद्दुःखदुःखिता कैकय्यऽप्यवश्यं न भवितेति सूचितम्।

**इन्दुमती**—( रामचन्द्रजीने कहा-) हे लक्ष्मण! राजा अश्वपतिकी कन्या कैकेयी जब ( भरतके राज्याभिषेक होने पर ) राज-माता होगी, तब वह अपनी दुःखिनी सपत्नी कौशल्या और सुमित्राके प्रति अच्छा वर्ताव नहीं करेगी ( अतः तुम्हारा यहां रहना आवश्यक है )।

**न स्मरिष्यति कौशल्यां सुमित्रां च सुदुःखिताम्।**
**भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः॥ १४॥**

**अन्वयः**—कैकेय्यां, पर्यवस्थितः, भरतः, राज्यम् , आसाद्य, सुदुः खितां, कौशल्यां, सुमित्रां, च, न, स्मरिष्यति ।

**सुधा**—ननु भरतः पालयिष्यतीत्यपेक्षायां सोऽपि कैकेयी परतन्त्रः न पालयिष्यतीत्यभिप्रायेणाह—**न स्मरिष्यतीति** । कैकेय्यां = कैकेयीसपत्नीतिरस्कारविषये, पर्यवस्थितः = प्रतिष्ठितः, भरतः = कैकेयीसूनुः, राज्यं=चक्रवर्त्तिपदम् , आसाद्य = प्राप्य, सुदुःखितां = मद्विरहजनितक्लेशेनातिदुःखितां, कौशल्यां = मम मातरं, सुमित्रां = तव मातरं, च, न स्मरिष्यति = चिन्तयिष्यति तथाच यत्र स्मरणमेव न तत्र पालनस्य का वार्तेति भावः ।

**इन्दुमती**—(रामचन्द्रजीने कहा—) हे लक्ष्मण ! भरत भी राज्य पाकर अपनी माता कैकेयीके आज्ञानुसार ही काम करेगा अतः वह भी दुःखिनी माता कौशल्या और सुमित्राकी खोज-खबर नहीं करेगा ( इसलिये तुम्हारा यहां रहना आवश्यक है )।

**तामार्यां स्वयमेवेह राजानुग्रहणेन वा ।**
**सौमित्रे ! भर कौशल्यामुक्तमर्थममुं चर ॥ १५ ॥**

**अन्वयः**—हे सौमित्रे ! राजानुग्रहणेन, वा, ( तदभावे ) स्वयम् , एव, आर्यां, तां, कौशल्यां, भर, उक्तम् , अमुम् , अर्थम् , इह, चर ।

**सुधा**—ननु यदि चैते रक्षितुमसमर्थास्तर्हि मयापि रक्षितुं कथं शक्यमित्यत आह—**तामिति** । हे सौमित्रे = लक्ष्मण ! राजानुग्रहणेन = राजानुमत्या, वा = अथवा, (तदभावे) स्वयमेव, इह=अयोध्यायाम् आर्यां=श्रेष्ठां, तां=प्रसिद्धां, कौशल्यां=मम मातरं, (स्वमातरं च) भर = पालय। अस्योत्तरं त्वया न वाच्यमित्यत आह—**उक्तमिति** । उक्तं = मया वर्णितम् , अमुम् अर्थम्=इह स्थितौ प्रयोजनं, चर=जानीहि। "ये गत्यर्थास्ते ज्ञानार्थाः" इत्युक्तिप्रसिद्धेः प्रकृते चरो ज्ञानमर्थोऽवगन्तव्यः ।

**इन्दुमती**—( रामचन्द्रजीने कहा— ) अतः हे लक्ष्मण ! इस मेरे कथन को मानो और तुम यहीं (अयोध्यामें) रहकर राजा ( भरत ) का अनुग्रहको पाकर अथवा ( यदि भरत तुम्हारे प्रतिकूल चलें तो ) स्वयं (अपने भुज-बलसे) अपनी श्रेष्ठ माता कौशल्या ( और सुमित्रा ) का भरण-पोषण करो ( तुम्हारे भी वन चले जानेपर माताओंको बड़ा कष्ट होगा )।

**एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता ।**
**धर्मज्ञ ! गुरुपूजायां धर्मश्चाऽप्यतुलो महान् ॥ १६ ॥**

**अन्वयः**—हे धर्मज्ञ ! एवं, च, ते, गुरुपूजायां (कृतायां) सुदर्शिता, मयि, भक्तिः, भविष्यति, (अत एव) अतुलः, महान् , धर्मः, च, अपि (भविष्यति)।

**सुधा**—नन्विहस्थितौ तव शुश्रूषाभङ्गः स्यादत आह-**एव**मिति। हे धर्मज्ञ-धर्मवेत्तृन् ! एवं=मदुक्तप्रकारेण, च=हि, ते=त्वया, गुरुपूजायां=मात्रादिशुश्रूषायां ( कृतायां ) सुदर्शिता=विधिनोक्ता, मयि=रामे, भक्तिः परानुरक्तिः, भविष्यति=संपत्स्यति, ( अत एव ) अतुलः=अनुपमः, महान्=अधिकं, धर्मः, च, अपि=पुण्यञ्चापि, ( भविष्यति ) इहैव स्थित्वा मात्रादिशुश्रूषयाऽस्मत्सेवाऽपि सञ्जातेति न तव सेवाभङ्गलेशोऽपीति भावः।

**इन्दुमती**—(रामचन्द्रजीने पुनः कहा—) हे धर्मज्ञ लक्ष्मण ! इस प्रकार कार्य करनेसे ( अयोध्यामें रहकर माता कौशल्या और सुमित्राकी रक्षा करनेसे ) तुम्हारी परम भक्ति प्रदर्शित होगी और साथ ही माताओंकी सेवा-सुश्रूषा करनेसे तुमको बड़ा भारी पुण्य भी होगा।

**एवं कुरुष्व सौमित्रे ! मत्कृते रघुनन्दन !।**
**अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम् ॥ १७ ॥**

हे रघुनन्दन ! सौमित्रे !, मत्कृते, एवं, कुरुष्व, ( अन्यथा ) अस्माभिः, विप्रहीणायाः, मातुः, सुखं, न, भवेत् , नः, ( च सुखं न भवेत् )।

**सुधा**—उपसंहरति – **एव**मिति। हे रघुनन्दन=रघुकुलानन्ददायक ! सौमित्रे=लक्ष्मण !, मत्कृते=मदर्थम् , एवं=मदुक्तप्रकारेण, कुरुष्व=विधत्स्व, ( अन्यथा ) अस्माभिः=आवाभ्यां सीतया च, विप्रहीणायाः=वियुक्तायाः, मातुः=जनन्याः, सुखं=शर्म, न भवेत्=न स्यात् , ( तथासति ) नः=अस्माकं ( च सुखं न भवेत् ) अत एवं न विधातव्यमित्याशयः।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे रघुकुल आनन्दवर्धक लक्ष्मण ! मेरे कहनेसे तुम ऐसा ही करो (अयोध्यामें ही रहो) क्योंकि हमलोगोंके ( हमारे, तुम्हारे और सीताके ) यहां न रहनेपर माता ( कौशल्या और सुमित्रा ) को सुख नहीं होगा।

**एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा।**
**प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८ ॥**

**अन्वयः**—तु, रामेण, एवम् , उक्तः, तदा, वाक्यज्ञः, लक्ष्मणः, श्लक्ष्णया, गिरा, वाक्यकोविदं, रामं, प्रत्युवाच।

**सुधा**—यदार्थे त्विति। तु=यदा, रामेण=ज्येष्ठभ्रात्रा, एवम्=उक्तप्रकारेण, उक्तः=कथितः, तदा=तस्मिन् काले, वाक्यज्ञः=युक्तियुक्तवाक्यकोविदः, लक्ष्मणः=सौमित्रिः, श्लक्ष्णया=सरसया, गिरा=वाचा, वाक्यकोविदं=वाक्यपण्डितं, रामं=ज्येष्ठभ्रातरं, प्रत्युवाच=कथयामास।

**इन्दुमती**—(वाल्कीकिजी कहते है कि-) इस प्रकार जब श्रीरामचन्द्रजीने ( माता कौशल्या और सुमित्राकी देख-रेख करनेके लिये अयोध्यामें रहनेको ) कहा, तब युक्तियुक्तितर वाक्योंको जाननेवाले श्री लक्ष्मणजी वाक्य-पण्डित श्रीरामचन्द्रजीको मधुर वचनोंसे उत्तर देने लगे—।

**तवैव तेजसा वीर ! भरतः पूजयिष्यति ।**
**कौशल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥**

**अन्वयः**—हे वीर ! तव, एव, तेजसा, प्रयतः, कौशल्यां, च, सुमित्रां च, भरतः, पूजयिष्यति, अत्र, संशयः, न, ( कर्त्तव्यः )

**सुधा**—पूर्वोक्तानुपपत्तिं परिहरन्नाह-**तवैवेति**। हे वीर=क्षात्रतेजः संपन्न !, तव=भवतः, एव, तेजसा=पराक्रमेण, प्रयतः=प्रयत्नेन, कौशल्यां=तव मातरं, च=तथा, सुमित्रां=मम मातरं, च, भरतः=कैकेयीतनयः, (एव) पूजयिष्यति=अप्रमेयबलराममातुरसेवायां मम महाननर्थः संपत्स्यतीति मत्वा सेविष्यते,। अत्र=अस्मिन् विषये, संशयः=भरतो मम मातुः सेवां करिष्यति न वेति संदेहः, न, ( कर्त्तव्य )। किन्तु—

**इन्दुमती**—( लक्ष्मणजीने कहा—) हे वीर राघव ! आपके प्रतापसे ( भयसे ) भरत माता कौशल्या और सुमित्राका प्रतिपालन करेगा ( न कि दुःख देगा ), इसमें कुछ भी सन्देह नहीं है ( परन्तु-)।

**यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् ।**
**प्राप्य दुर्मनसा वीर ! गर्वेण च विशेषतः ॥ २० ॥**
**तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः ।**
**तत्पक्षानपि तान् सर्वांस्त्रैलोक्यमपि किं तु सा ॥ २१ ॥**

**अन्वयः**—हे वीर ! उत्तमं, राज्यं, प्राप्य, दुर्मनसा, विशेषतः, गर्वेण, च, दुःस्थः, ( सन् ) भरतः, यदि, ( मातरं ) न, रक्षेत, (तदा) दुर्मतिं, क्रूरं, तम्, अहं, वधिष्यामि, (अत्र) संशयः, न ( वर्त्तते ) तत् पक्षान्, तान्, सर्वान्, अपि, ( वधिष्यामि ) ( तत्पक्षं ) त्रैलोक्यम्, अपि, ( वधिष्यामि ) "किं तु सा" इत्युत्तरश्लोकान्वयि।

**सुधा**—तदसेवने कालान्तरभवं भयं दर्शयति—**यदी**त्यादिना। हे वीर=क्षात्रतेजःसंपन्न राम!, उत्तमं=श्रेष्ठं, राज्यम्=आधिपत्यं, प्राप्य=लब्ध्वा, दुर्मनसा=कैकेय्यनुरोधाद्दुष्टान्तःकरणेन, विशेषतः, गर्वेण=प्राप्तराज्यं मां किमन्यः करिष्यतीत्यहङ्कारेण, च, दुःस्थः=दुर्मार्गस्थः, यद्वा चञ्चलचित्तः, (सन्) भरतः=कैकेयीसुतः, यदि=चेत्, (मातरं) न रक्षेत=न पालयेत्, (तदा) दुर्मतिं=दुष्टनिश्चयम् (अत एव) क्रूरं=नृशंसं, तं=भरतम्, अहं, वधिष्यामि=हनिष्यामि (अत्र) संशयः=अयं राजा एनं हनिष्यतिनवेति संदेहः, न (वर्तते)। ननु तेन विरोधे तत्पक्षीयराजान्तरकृतोपद्रवः स्यादत आह—**तत्पक्षा**निति। तत्पक्षान्=तत्पक्षमाश्रित्य युयुत्सून्, तान्, सर्वान्=अखिलान् नृपतीन्, अपि, (हनिष्यामि) ननु बहुभिः सह विरोधे जये संशयः संभाव्यत इति चेदत आह—**त्रैलोक्य**मिति। (तत्पक्षं) त्रैलोक्यं=त्रिभुवनम्, अपि, (हनिष्यामि) तावती शक्तिरस्मत्पार्श्वेऽस्तीति भावः। वधिष्यामीत्यार्षः प्रयोगः।

**इन्दुमती**—(लक्ष्मणजीने पुनः तमककर कहा—) हे वीर राघव! यदि इस उत्तम (अयोध्या) राज्यको पाकर (भी) विशेषतः (अत्यन्त) गर्वसे (राज-मदसे) कुपथगामी होकर वह भरत (माता कौशल्या और सुमित्राकी) रक्षा नहीं करेगा तो मैं उस दुष्ट नृशंसको मार डालूंगा—इसमें सन्देह नहीं है। (उस समय) जितने उसके पक्षपाती होंगे उनको भी मैं मार डालूंगा। (इतना ही नहीं) तीनों लोक भी उसकी हिमायतमें खड़े क्यों न हो मैं तीनों लोकोंका संहार कर डालूंगा (तु) किन्तु (इसकी आवश्यकता नहीं होगी क्योंकि) वह—।

**कौशल्या बिभृयादार्या सहस्रं मद्विधानपि।**
**यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीविनाम्॥ २२॥**

**अन्वयः**—पूर्वतः "किं तु सा" इति सम्बन्धनीयम्। (यद्येवं) किं, तु, यस्याः, उपजीविनां, ग्रामाणां, सहस्रम्, सम्प्राप्तं, सा, आर्या, कौशल्या, मद्विधान्, सहस्रम्, अपि, बिभृयात्।

**सुधा**—अपि च स्वात्मभरणे कौशल्यायाः कस्याऽप्यपेक्षा नास्तीति दर्शयति—(**किं तु सा**) **कौशल्ये**त्यादिना। (यद्येवं किं तु), यस्याः=कौशल्यायाः, उपजीविनाम्=उपजीविभिः=भृत्यादिभिरित्यर्थः, ग्रामाणां=संवसथानां "समौ संवसथग्रामौ" इत्यमरः। सहस्रं=सहस्रसंख्याकं, संप्राप्तं=संलब्धं, सा=प्रसिद्धा,

आर्या=कुलीना, कौशल्या=तव माता, मद्विधान्=मत्सदृशान्, सहस्रमपि=सहस्रसंख्याकमपि, बिभृयात्=धार्यात् पुष्याच्च।

**इन्दुमती—**(वह) आर्या माता कौशल्याजी तो मुझ जैसे हजारोंका स्वयं पालन-पोषण कर सकती हैं, क्योंकि जिनके नेग पाने वाले सहस्रों गावोंके मालिक हैं।

**तदात्मभरणे चैव मम मातुस्तथैव च।**
**पर्याप्ता मद्विधानां च भरणाय मनस्विनी॥ २३॥**

**अन्वयः—**तत्, मनस्विनी, च, एव, आत्मभरणे, पर्याप्ता, तथा, एव, मम, मातुः, च, भरणाय, (पर्याप्ता, तथा) मद्विधानां, च (भरणाय) (पर्याप्ता) अस्तीति शेषः।

**सुधा—**उक्तमेव भङ्ग्यन्तरेणाह—**तदिति**। तत्=उक्तहेतोः, मनस्विनी=दृढमनस्का, च एव=यथैव, आत्मभरणे=स्वपोषणे, पर्याप्ता=परिपूर्णा, तथा एव=तेन प्रकारेणैव मम, मातुः=सुमित्रायाः, च=अपि, भरणाय=पोषणाय, (पर्याप्ता, तथा) मद्विधानां=मत्सदृशानां च, (भरणाय पर्याप्ता) अस्तीति शेषः।

**इन्दुमती—**इसलिये हे राघव! वे यशस्विनी माता कौशल्याजी अपना और मेरी माता (सुमित्रा) का तथा मुझ जैसे (सहस्रों) का भरण-पोषण भली-भांति (स्वयं) कर सकती हैं।

**कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते।**
**कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते॥ २४॥**

**अन्वयः—**(यदेवमतः) माम्, अनुचरं, कुरुष्व, इह, वैधर्म्यं, न, विद्यते, (एवं सति) अहं, कृतार्थः, भविष्यामि, तव, अर्थः च, प्रकल्पते।

**सुधा—**एवं रामोक्तं परिहृत्य प्रस्तुतं स्वाभिमतं कैङ्कर्यं प्रपञ्चयन्नाह—**कुरुष्वेति**। (यदेवमतः) मां=लक्ष्मणम्, अनुचरं=सेवकम्, कुरुष्व=अनुमन्यस्व, इह=मत्सेवानुमतौ, वैधर्म्यं=वैपरीत्यसाधकं (किञ्चिदपि) न विद्यते=नास्ति, भवदुक्तहेतोरन्यथासिद्धेरुपपादितत्वादिति शेषः। ननु कैङ्कर्याकरणे तव का हानिरित्यत आह—**कृतार्थ** इति। (एवं सति) अहं, कृतार्थः=कृतकृत्यः, भविष्यामि=भविताऽस्मि, तव=भवतः, अर्थे=स्वायासं विना फलमूलाद्याहरणं, च, प्रकल्पते=प्रसिद्ध्यति, एवञ्चोभयहितं मदनुगमनमित्यभिप्रायः। "प्रकल्पते" इति वर्तमानसामीप्ये भविष्यति लट्।

**इन्दुमती**—अत एव हे राघव ! आप मुझे अपना अनुचर बनाइये ( मुझे भी साथमें वन लेचलिये ) मेरे चलनेमें कोई भी विप्रतिपत्ति नहीं होगी। प्रत्युत मैं कृत-कृत्य हो जाऊंगा और आपका भी अर्थ-साधन होगा।

**धनुरादाय सगुणं खनित्रपिटकाधरः।**
**अग्रतस्ते गमिष्यामि पन्थानं तव दर्शयन्॥ २५॥**

**अन्वयः**—खनित्रपिटकाधरः, (अहं) सगुणं, धनुः, आदाय, तव, पन्थानं, दर्शयन्, ते, अग्रतः, गमिष्यामि।

**सुधा**—कैङ्कर्यमेव दर्शयन्नाह—**धनुरित्यादिना**। खनित्रपिटकाधरः= खनित्रं-मूलकन्दखननसाधकं कुद्दालः, पिटका-फलमूलाद्याहरणयोग्या वंशादिनिर्मितमञ्जूषाविशेषः, खनित्रेण सहितां पिटिकां धरति यः सस्तथोक्तः, ( अहं ) सगुणं=ज्यासहितं, धनुः=कार्मुकम्, आदाय=गृहीत्वा, तव=भवतः, पन्थानं= मार्गं, दर्शयन्=अवलोकयन्, ते=तव, अग्रतः=अग्रे, गमिष्यामि=व्रजिष्यामि। अत्र धनुर्ग्रहणं श्वापदादिभ्यो नृशंसजन्तुभ्यो रक्षार्थम्।

**इन्दुमती**—(लक्ष्मणजी अर्थ-साधनका स्पष्टीकरण करते हैं—) हे राघव! मैं तीर धनुष, खंता (जमीनसे कंद-मूल खोदनेका औजार) और बांसकी बनी फल-मूल रखनेकी पेटी लिये हुए आपके आगे आगे ( वनमें ) रास्ता बतलाता हुआ चलूंगा।

**आहरिष्यामि ते नित्यं मूलानि च फलानि च।**
**वन्यानि च तथान्यानि स्वाहार्हाणि तपस्विनाम्॥ २६॥**

**अन्वयः**—नित्यं, मूलानि, च, फलानि, च, तथा, तपस्विनां, स्वाहार्हाणि, अन्यानि, च, वन्यानि, ते, आहरिष्यामि।

**सुधा**—इत्थं पथि सम्भावितं कैङ्कर्यमभिधाय स्थाने सम्भावितमाह—**आहरिष्यामीति**। नित्यं=प्रतिदिनं, मूलानि, च=तथा, फलानि=तत्तदृतुभवानि आम्रादीनि, च=तथा, तपस्विनां=तपस्यावतां जनानां, स्वाहार्हाणि= होमयोग्यानि हविर्भूतानि, अन्यानि=शाकप्रियालबीजक्षौद्रादीनि, च, वन्यानि= वनोत्पन्नानि, ते=त्वदर्थम्, आहरिष्यामि=आनेष्यामि।

**इन्दुमती**—और हे राघव! ( वनमें ) नित्यप्रति कन्द-मूल, फल तथा तपस्वियोंके हवन करनेकी सामग्री एवं वनमें उत्पन्न होने वाली अन्य आवश्यक वस्तुयें भी ला दिया करूंगा।

भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥

**अन्वयः**—गिरिसानुषु, वैदेह्या, सह, भवान्, रंस्यते, अहं, तु, ते, जाग्रतः, स्वपतः, च, सर्वं, करिष्यामि ।

**सुधा**—कैङ्कर्यान्तरमाह—**भवानिति** । गिरिसानुषु = पर्वतशृङ्गेषु, वैदेह्या= सीतया, सह = सार्धं, भवान्, रंस्यते = विहरिष्यते, अहं = लक्ष्मणः, तु, ते = तव, जाग्रतः = जागरणं विदधतः, स्वपतः = शयनं कुर्वतः, च, सर्वम् = आज्ञप्तमनुमितं, च, करिष्यामि = संपादयिष्यामि । अत्र "जाग्रतः स्वपतश्च" इत्युक्त्या स्वस्य निद्रानधीनत्वं सूचयति ।

**इन्दुमती**—( लक्ष्मणजीने कहा- हे राघव ! और ) आप सीताजीके साथ पर्वतोंके शिखरोंपर (निश्चिन्त होकर) विहार कीजियेगा । मैं आपके सोते-जागते ( रात्रि-दिवा ) सब कार्य कर दिया करूंगा अर्थात् रातमें आपके शयनके समय पहरेदारका काम करूंगा और दिनमें उपर्युक्त (छवीसवां श्लोकोक्त) कार्य करूंगा।

रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ।
व्रजाऽऽपृच्छस्व सौमित्रे ! सर्वमेव सुहृज्जनम् ॥ २८ ॥

**अन्वयः**—अनेन, वाक्येन, सुप्रीतः, रामः, तं, प्रत्युवाच, हे सौमित्रे ! व्रज, तु, सर्वम्, एव, सुहृज्जनम्, आपृच्छस्व ।

**सुधा**—अनेन = स्वपतश्चेत्यन्तेन, वाक्येन = वचसा, सुप्रीतः = सुप्रसन्नः, रामः, तं=लक्ष्मणं, प्रत्युवाच = प्रत्युक्तवान्, हे सौमित्रे = लक्ष्मण !, व्रज = मया सह अनुगच्छ, तु=किन्तु, सर्वमेव = निखिलमेव, सुहृज्जनं = सुहृदं-सौहार्दं, जनयति नित्यं प्रकटयतीति तं मात्रादिमित्यर्थः । आपृच्छस्व=अनुमतिं गृहाण, एतेन मात्रादिसम्मानमेव कर्त्तव्यं न तु सह नेतव्यमिति सूचितम् ।

**इन्दुमती**—रामचन्द्रजी अपने छोटे भाई लक्ष्मणजीके इन ( उपर्युक्त ) वचनोंको सुन अति प्रसन्न होकर बोले—हे सौमित्रे लक्ष्मण ! जाओ, ( पहले ) अपने सब ( माता आदि ) सुहृज्जनोंसे ( मेरे साथ वन चलनेकी ) अनुमति ले आओ ( तदनन्तर— ) ।

ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् ।
जनकस्य महायज्ञे धनुषो रौद्रदर्शने ॥ २९ ॥
अभेद्ये कवचे दिव्ये तूणी चाऽक्षय्यसायकौ ।

आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ।
सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ! ॥ ३१ ॥

अन्वयः—राज्ञः, जनकस्य, महायज्ञे, महात्मा, वरुणः, स्वयं, च, ये, रौद्रदर्शने, दिव्ये, धनुषी, दिव्ये, अभेद्ये, कवचे (तथा) अक्षय्यसायकौ, तूणी, च, हेमपरिष्कृतौ, (अत एव) आदित्यविमलाभौ, द्वौ, खड्गौ, सत्कृत्य, ददौ, एतत्, सर्वम्, आचार्यसद्मनि, (मया) निहितं, (तत्) सर्वम्, आयुधं, हे लक्ष्मण !, (त्वम्) क्षिप्रम्, आदाय, आव्रज ।

सुधा—राज्ञः = भूपतेः, जनकस्य = वैदेहस्य, महायज्ञे = महामखे, महात्मा, वरुणः = प्रचेताः, स्वयं च=स्वयमेव, ये, रौद्रदर्शने = भयङ्करावलोकने, दिव्ये= अमर्त्ये, धनुषी=चापौ दिव्ये=अलौकिके, अभेद्ये = अच्छेद्ये, कवचे = उरश्छदसी "उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्" इत्यमरः । (तथा) अक्षय्यसायकौ= अक्षय्यबाणौ, तूणी=इषुधी, च=तथा, हेमपरिष्कृतौ=सुवर्णभूषितौ, (अत एव) आदित्यविमलाभौ=स्वच्छदिवाकरकान्तिसदृशौ, द्वौ, खड्गौ=निस्त्रिंशौ, 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः। सत्कृत्य=संमान्य, ददौ=अर्पयामास, एतत्, सर्वं=निखिलं धनुरादिकम्, आचार्यसद्मनि=इक्ष्वाकुकुलगुरुवसिष्ठगृहे, (मया) निहितं=पूजार्थं स्थापितं, (तत्) सर्वम्=अखिलम्, आयुधम्=अस्त्रम्, (अत्र जातावेकवचनम्) हे लक्ष्मण=सौमित्रे !, (त्वं) क्षिप्रं= शीघ्रम्, आदाय= गृहीत्वा, आव्रज = आगच्छ । अत्र धनुरादिषु सर्वत्र द्विवचनोपादानादावयोर्ददाविति सिद्धम् ।

यद्यप्यत्र रामायणे बालकाण्डेऽनुक्तोऽयं विषयः, तथापि यथा सुन्दरकाण्डे "मणिरत्नमिदं दत्तं वैदेह्याः श्वसुरेण मे । वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते॥" इत्युक्तं, तथा वायसवृत्तान्तः सुन्दरकाण्डेऽनूद्यते तद्वदेवात्रानुवादात्सिद्ध इति विभावनीयम् ।

इन्दुमती—(सुहृज्जनोंकी आज्ञा पानेके पश्चात्) पुनः हे लक्ष्मण ! राजर्षि जनकके महायज्ञमें (जानकी-विवाहके अवसरपर) महात्मा वरुणदेवने स्वयं (अपने हाथोंसे) जो भयंकर दो धनुष, दो अमोघ कवच, दो दिव्य अक्षय (जो बाणोंसे कभी खाली नहीं होता ऐसा), तरकस और सुवर्णसे मढ़ा हुआ सूर्यके समान अत्यन्त देदीप्यमान दो तलवारें (हम-तुम दोनोंको) सम्मान

करके दी थीं वे सब गुरु वशिष्ठजीके घरमें रखे हैं; उन सब अस्त्र-शस्त्रोंको लेकर जल्दीसे तुम यहां चले आओ।

**स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः।**
**इक्ष्वाकुगुरुमागम्य जग्राहाऽऽयुधमुत्तमम् ॥ ३२ ॥**

**अन्वयः**—वनवासाय, निश्चितः, सः, सुहृज्जनम् , आमन्त्र्य, ( ततः ) इक्ष्वाकुगुरुम् , आगम्य, उत्तमम् , आयुधं, जग्राह।

**सुधा**—वनवासाय=वनं गन्तुं, निश्चितः = कृतनिर्णयः, सः=लक्ष्मणः, सुहृज्जनं=मात्रादिम् , आमन्त्र्य = अनुमान्य, ( ततः ) इक्ष्वाकुगुरुं=रघुकुलगुरुं वशिष्ठम् , आगम्य = प्राप्य, उत्तमं=श्रेष्ठम् , आयुधम्=अस्त्रं धनुरादि, जग्राह= गृहीतवान्।

**इन्दुमती**—(वाल्मीकिजी कहते हैं कि इसप्रकार श्रीरामचन्द्रजीके वचनोंको सुनकर ) अपना वन जाना निश्चत हुआ जान, श्रीलक्ष्मणजीने अपनी माता सुमित्रा आदि सुहृज्जनोंके पास जाकर विदा मांगी और तदुपरान्त कुल-गुरु वशिष्ठजीके घरसे उन उत्तम २ ( वरुण प्रदत्त ) अस्त्र-शस्त्रोंको ले आये ( तदुपरान्त—)।

**तद्दिव्यं राजशार्दूलः सत्कृतं माल्यभूषितम्।**
**रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३३ ॥**

**अन्वयः**—राजशार्दूलः, सौमित्रिः, दिव्यं, सत्कृतं, माल्यभूषितम् , सर्वं, तत् , आयुधं, रामाय, दर्शयामास।

**सुधा**—राजशार्दूलः =राजव्याघ्रः, सौमित्रिः=लक्ष्मणः, दिव्यं=दिवि भवं, सत्कृतं= पूजितं, माल्यभूषितं=स्रगलङ्कृतं, सर्वम्=अखिलं, तत्=गुरुगृहानीतम् , आयुधम्=अस्त्रम् (जातावेकवचनम्) आयुधानीत्यर्थः, रामाय=ज्येष्ठभ्रात्रे, दर्शयामास =अवलोकयामास।

**इन्दुमती**—( वाल्मीकिजी कहते हैं कि गुरु वशिष्ठजीके घरसे धनुषादि अस्त्र-शस्त्रोंको लाकर- ) मालाओंसे अलंकृत तथा पूजित उन सभी उत्तम आयुधोंको लक्ष्मणजीने श्रीरामचन्द्रजीको दिखलाया।

**तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम्।**
**काले त्वमागतः सौम्य ! काङ्क्षिते मम लक्ष्मण ! ॥ ३४ ॥**

**अन्वयः**—आत्मवान् , रामः, आगतं, लक्ष्मणं, ( वीक्ष्य ) प्रीत्या, उवाच,

हे सौम्य ! लक्ष्मण ! मम, काङ्क्षिते, काले, त्वं ( शीघ्रम् ) आगतः ।

**सुधा**—आत्मवान्=जीवादिनियन्ता, रामः=दाशरथिः, आगतम्=आयातं, लक्ष्मणं=सौमित्रिं, ( वीक्ष्य ) प्रीत्या=प्रेम्णा, उवाच=उक्तवान्, हे सौम्य लक्ष्मण-सुभग सौमित्रे !, मम काङ्क्षिते=मदीप्सिते, काले=प्रयोजननिमित्त-संपादनोचितसमये, त्वं, ( शीघ्रम् ) आगतः=प्राप्तः ।

**इन्दुमती**—( तदुपरान्त वशिष्ठजीके घरसे धनुषादि अस्त्र-शस्त्रोंको लेकर शीघ्रतासे ) आये हुए लक्ष्मणजीको ( देखकर ) रामचन्द्रजीने प्रसन्न होकर कहा—अहो, भद्र लक्ष्मण ! ( मैं अभी तुम्हारी याद कर रहा था ) भले समय पर तुम आगये ।

**अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ।**
**ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परन्तप ! ॥ ३५ ॥**

**अन्वयः**—हे परंतप ! यत्, मामकम्, इदं, धनं, ( तत् ) त्वया, सह, तपस्विभ्यः, ब्राह्मणेभ्यः, अहं, प्रदातुम्, इच्छामि ।

**सुधा**—काङ्क्षितमेवाह-अहमिति । हे परन्तप=परमतपस्विन् लक्ष्मण ! यत्, मामकं=मदुपार्जितम्, इदं=दृश्यमानं, धनं=वित्तं, ( तत् ) त्वया=भवता, सह, तपस्विभ्यः=तपस्यानुष्ठातृभ्यः, ब्राह्मणेभ्यः=विप्रेभ्यः, अहं=रामः, प्रदातुं=समर्पितुम्, इच्छामि=अभिलषामि ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे परम तपस्विन् लक्ष्मण ! ( देखो ) मेरे पास जो कुछ मेरी (उपभोग करनेकी निजी) सम्पत्ति है, उसे मैं तपस्वी ब्राह्मणोंको दे देना चाहता हूं, तुम इस कार्यमें मेरी मदद करो ।

**वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ।**
**तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३६ ॥**

**अन्वयः**—इह, गुरुषु, भक्त्या, (ये) द्विजसत्तमाः, दृढं, वसन्ति, तेषाम्, अपि, ( तथा ) मे, सर्वेषाम्, उपजीविनां, च, भूयः, ( दातुमिच्छामि )

**सुधा**—इह=मत्समीपे, गुरुषु=ज्ञानदेषु, भक्त्या=प्रेम्णा, (ये) द्विजसत्तमाः=विप्रमुख्याः, दृढं=दृढपूर्वकं, वसन्ति=निवसन्ति, नित्यं गुरुशुश्रूषणं कुर्वन्तीत्यर्थः । तेषामपि तेभ्य अपि, ( तथा ) मे=मम, सर्वेषाम् उपजीविनां च=सर्वेभ्यो भृत्येभ्यश्च, भूयः=अतिशयेन, नित्यदेयादधिकतया ( दातुमिच्छामि ) इति तानानयेति शेषः ।

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे लक्ष्मण ! इस नगरमें जो गुरुमें दृढ़ भक्ति रखने वाले उत्तम ब्राह्मण बसते हैं, उन सबको तथा अपने भृत्य वर्गों को भी ( इस वनगमनके अवसर पर ) अधिकसे अधिक धन देना उचित है ।

**वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् ।**

**अपि प्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान्द्विजातीन् ॥३७॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकत्रिंशः सर्गः ।

**अन्वयः**—द्विजानां, प्रवरं, वसिष्ठपुत्रम्, आर्यं, सुयज्ञं, तु, आशु, त्वम्, आनय, (तथा) समस्तान्, अपरान्, शिष्टान्, द्विजातीन्, अपि, अभ्यर्च्य, वनं, प्रयास्यामि ।

**सुधा**—द्विजानां=विप्राणां, प्रवरं=श्रेष्ठं, वसिष्ठपुत्रं=कुलगुरुवसिष्ठसुतम्, आर्यं="कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः ॥" इत्युक्तलक्षणोपेतं महाकुलीनमिति यावत् । सुयज्ञं=सुयज्ञनामानं, तु, आशु=शीघ्रं, त्वम्, आनय=प्रापय, ( तथा ) समस्तान्=समग्रान्, अपरान्=अन्यान्, शिष्टान्=फलसाधनतांशे भ्रान्तिरहितान्, द्विजातीन्=ब्राह्मणान्, अपि, ( आनय, अहं सुयज्ञं तान् द्विजांश्च ) अभ्यर्च्य=पूजयित्वा, वनं=महारण्यं, प्रयास्यामि=प्रव्रजिष्यामि । अत्र "वसिष्ठपुत्रं सुयज्ञमानय" इत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठः पुरोहितः "तत्पुत्रस्य तत्पुत्रः" इति न्यायेन सुयज्ञस्य विशिष्यानयननियोग इति कुशलाः ।

इति साहित्य-व्याकरणाचार्य-श्रीकृष्णमोहनशास्त्रिनिर्मित "सुधा" टीकायामेकत्रिंशः सर्गः ।

---

**इन्दुमती**—( रामचन्द्रजीने कहा- ) हे लक्ष्मण ! ब्राह्मणोंमें श्रेष्ठ वशिष्ठजीके पुत्र पूज्य श्री सुयज्ञजीको तुम जाकर शीघ्र बुला लाओ । मैं उनका तथा तत्पश्चात् अन्य भी सभ्य कर्मठ द्विजातियों ( ब्राह्मण-क्षत्रिय-वैश्यों ) का यथा योग्य सम्मान करके वन जाउँगा ।

इस प्रकार दरभंगा मण्डलान्तर्गत 'तरौनी' ग्रामवासी पण्डित श्रीरामचन्द्रझा व्याकरणाचार्य विरचित 'इन्दुमती' टीकामें अयोध्या काण्डका एकतीसवां सर्ग समाप्त हुआ ।

---

**समाप्तश्चाऽयं ग्रन्थः ।**

## प्रथम-परीक्षोपयोगि-ग्रन्थाः—

१ लघुसिद्धान्तकौमुदी-परीक्षोपयोगी 'बालबोधिनी' टीका सहित ॥≡)
२ लघुकौमुदी-प्रयोगसूची । ।)
३ सोत्तरा-प्रथमा-प्रश्नावली-सन् ४७ तकके प्रश्नोत्तर संयोजित नूतन संस्करण १॥)
४ रूपचन्द्रिका-लघुकौमुदीमें आये हुए शब्दों तथा धातुओंकी अर्थसहित रूपावली । 'समासचक्र' सहित परिवर्धित संस्करण २॥)
५ अमरकोश-प्रथमकाण्ड-'मणिप्रभा' भाषा टीका सहित १)
६ नीतिशतकम्-'ललिता' 'बाला' संस्कृत हिन्दी टीका सहित १)
७ पञ्चतन्त्रम् (अपरीक्षितकारक)-'सुबोधिनी' सं० हिन्दीटीका सहित ॥)
८ तर्कसंग्रहः-प्रथमपरीक्षोपयोगी लक्षण-टिप्पणी ( प्रश्नोत्तर ) सहित 'इन्दुमती' नामक विस्तृत भाषा टीका ।≡)
९ संस्कृतरचनानुवादशिक्षक-संस्कृतसे हिन्दीमें, हिन्दीसे संस्कृतमें अनुवादोपयोगी सर्वोत्तम ग्रन्थ १।)
१० प्रबन्धपारिजात-प्रबन्ध लिखनेका नियम तथा परीक्षामें आनेयोग्य निबन्धोंका उत्तर तथा पत्र लेखनप्रकार सुभाषित गद्यावली, सुभाषित पद्यावली, लौकिक न्यायमाला आदि विविध विषयोंका संग्रह १।)
११ श्रीकोशः-( हिन्दीसे संस्कृत जेबी कोश ) १।)
१२ छन्दःकौमुदी-( श्रुतबोधके आधार पर ) भाषाटीका प्रश्नपत्र उदाहरण सहित ।≡)

# विदुलोपाख्यानम्

## सान्वय-लीला-विलास-संस्कृत-हिन्दीटीका द्वयोपेतम् ।

सन् ४८ के नवीन पाठ्यक्रमके अनुसार यह ग्रन्थ प्रकाशित किया गया है । इस ग्रन्थकी 'लीला' नामक संस्कृत व्याख्यामें अन्वय, पर्याय, समास, कोशादि देकर श्लोकोंकी अति सरल व्याख्या कर दी गयी है । साथमें 'विलास' नामकी विस्तृत हिन्दी भाषा टीका होनेसे तो इस संस्करणकी उपयोगिता और भी अधिक बढ़ गयी है । प्रथमाके सुकोमलमति विद्यार्थियोंके लिये यही एक सर्वोत्तम संस्करण सिद्ध हो चुका है । शीघ्रता कीजिये इसकी बहुत ही कम प्रतियां बच गयी हैं । ॥)

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी । न......